अत्र चाभावाधिकरणभूतलादिप्रकारकाभावविशेष्यकबोधेऽधिकरणप्रकारकप्रतियोगिविशेष्यकबोधसामग्रीहेतुः । सा च सप्तम्यन्तभूतलादिपदसमभिव्याहारः । एवमभावप्रकारकाधिकरणविशेष्यकबोधेऽपि तेन—'भूतले घटः, भूतले न घटः, चैत्रः पचति, न पचति चैत्र, इत्यादिप्रयोगप्रत्ययाः । अन्यथा भूतलं न घटः चैत्रो न पाककृतिरित्यत्राधिकरणवाचिसप्तम्यन्तपदाभावेऽप्यत्यन्ताभावबोधः स्यात् । अत एव पृथिव्यां गन्धो न जले इत्यादौ (१)गन्धविशेष्यक एव बोधः ।

अन्ये तु नञोऽभावमात्रे शक्तिः । शक्यतावच्छेदकं च लाघवादभावत्वम् अतो नान्योन्याभावे लक्षणा ।

(२)न चैवमपि घटपदान्नीलघटत्वप्रकारकप्रतीतौ घटपदलक्षणेवान्योन्याभावप्रकारकप्रतीत्यर्थं नञो लक्षणावश्यिका । अन्यथा न घट इत्यत्राभावप्रकारकप्रतीतौ पटः घटो नेति प्रतीत्यनन्तरं पटः घटो न वेति संशयः स्यात्, भिन्नप्रकारकत्वेनाभावनिश्चयस्याप्रतिबन्धकत्वात् । एवं वाक्ये प्रतिषेधस्थलेऽपि संसर्गाभावप्रतीत्यर्थं लक्षणावश्यिकेति वाच्यम् । प्रतियोग्यधिकरणवाचकपदयोः समानविभक्तिकत्वस्यान्योन्याभावबोधहेतुत्वस्य तयोः प्रथमादिविभक्तिकत्वस्यात्यन्ताभावबोधहेतुत्वस्य च कल्पनया लक्षणाया अभावात् ।

यद्वा नञ्समभिव्याहारे यत्पदार्थयोराधाराधेयभावसंसर्गेणान्वयः । तत्रात्यन्ताभावप्रत्ययः । यत्राभेदसंसर्गेणान्वयस्तत्रान्योन्याभावभानमिति व्युत्पत्तिः । तेन न पचति चैत्र इत्यत्रात्यन्ताभावबोधः सुवचः । किं चात्रात्यन्ताभावबोधो न नियतः । कदा चिदस्मादेव वाक्यात्पाकानुकूलकृतिमद्भिन्नश्चैत्र इत्यन्योन्याभावस्यापि बोधात् अतस्तादृशतात्पर्यज्ञानात्तादृशो बोध इति न लक्षणावश्यिकेति । (३)न चैवं प्रतिषेध

(१) गन्धविशेष्यक एवेति । पृथिवीनिरूपितवृत्तित्ववान् जलनिरूपितवृत्तित्वाभाववांश्च गन्ध इति बोधः । भूतले न घट इति वाक्यात्तात्पर्यवशात् कदाचिद्भूतलवृत्तिर्घटाभाव इति बोधः कदाचिद्भूतलवृत्तित्वाभाववान्घट इति बोध इति बोध्यम्,

(२) नचैवमपीति—यथा घटपदस्य घटत्वावच्छिन्नशक्ततया नीलघटत्वप्रकारकबोधजननाय घटपदस्य नीलघटे लक्षणा स्वीक्रियते तथा नञ् पदस्य अभावत्वावच्छिन्ने शक्तत्वेऽपि भेदत्वप्रकारकबोधस्य अभावत्वप्रकारकबोधस्य च जननाय लक्षणावश्यिका अन्यथा भूतलं घटवदिति निश्चयसत्त्वे भूतलं नीलघटवन्नवेति संशय इव घटः पटभेदवान्नवेति संशयो दुर्वारः स्यात् ।

(३) नानुयाजेष्वित्यत्र नञः प्रसज्यप्रतिषेधत्वं पर्युदासत्वं वेतिविकल्प्य पर्युदासपक्षे नञ्पदानुयाजपदाभ्यामनुयाजव्यतिरिक्ता यागालक्षणीया इति लक्षणाप्रसङ्गः प्रतिषेधपक्षे च

पर्युदासयोस्तुल्यत्वापत्तिः, इष्टापत्तेः। 'यजतिषु येयजामहं करोति नानुयाजेषु' 'नार्षेयंवृणीते न होतारं वृणीते' इत्यत्र वाक्यभेदकरोत्यनुषङ्ग (१)विकल्पपरिहाराणां पर्युदासबीजत्वात्। एवं च समासे वाक्ये वा क्वापि न लक्षणेति केचित्।

दीधितिकारास्तु संसर्गाभावत्वमन्योन्याभावत्वं च नञः शक्यतावच्छेदकमिति नञो नानार्थत्वं, तथाप्यघट इति समासे ऽन्योन्याभाववदुपस्थित्यर्थं नञो लक्षणा। अत एव प्रतिषेधापेक्षया पर्युदासो दुर्बलत्वेन गीयते। नानुयाजेष्वित्यत्र प्रतिषेधेपि न विकल्पापत्तिः। अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्यापि विशेषविधिनिषेधयोर्विशेषनिषेधाभ्यनुज्ञाफलकत्वनियमस्य व्युत्पत्तिसिद्धतया विधिप्रतिषेधयोरेकविषयत्वात्। नानुयाजेष्वित्यत्र तदभावेन वैषम्यात्। अतोऽत्र पूर्वोक्तयुक्त्यैव पर्युदाससिद्धिरित्याहुः।

केचित्तु निषेधस्य प्रसक्तिपूर्वकतया इष्टसाधत्वेन प्रमितस्य निषेधविषयत्वःनियमः। एवं च विध्यर्थव्यतिरेकबोधकनिषेधेनानिष्टसाधनत्वं निष्फलत्वं वा निषेधस्य बोध्यत इत्युभयोः प्रामाण्यायोगात् व्रीहिशास्त्रयवशास्त्रयोरिवांशतः पाक्षिकप्रामाण्याङ्गीकारेण विकलपापत्त्या सामान्यविधेर्विशेषविधिसमभिव्याहारेण तदितरपरत्वरूपपर्युदासाङ्गीकारइत्याहुः।

---

अनुयाजे न करोतीति श्रुतिवृत्तमेव एवमार्षेयम्वृणीते इति आर्षेयवरणकर्तव्यता प्रतिपाद्यते सा च नञा प्रतिषिध्यते निषेधपक्षे, पर्युदासपक्षे च आर्षेयपदनञ्पदवृणोतिपदैर्लक्षणया आर्षेयवरणव्यतिरिक्ते लक्षणा स्यात्। किंच नञः अनुयाजशब्दसम्बन्धे नञ्समासप्रसङ्ग इति प्रतिषेधत्वमाशङ्क्य, निषेधपक्षे निषेधस्य प्राप्त्यपेक्षतया अनुयाजेषु येयजामहङ्करोतीति शास्त्रेणैव प्राप्तिर्वक्तव्या साच निर्दोषशास्त्रकारितत्वान्मिथ्या कर्तुं न शक्यते इति विकल्प आस्थेय इति गौरवम् पर्युदासे तु लाघवम् अस्मिन्पक्षे समासापत्तिस्तु न नञ्समासस्य वैकल्पिकत्वात्। किं च निषेधपक्षे करोतीत्यस्य अनुषङ्गः वाक्यभेदश्च कर्तव्य इति पर्युदास एवेतिसिद्धान्तितम् शास्त्रदीपिकादौ। तत्र पर्युदासाश्रयणबीजं 'नञः संसर्गाभावेशक्तिः अन्योन्याभावे च लक्षणा इति निषेधाश्रयणे लक्षणापत्तिरेवेति' कस्यचिदभिमतं दूषयितुमुपक्रमते न चैवमित्यादिना।

(१)विकल्पापत्त्येति। प्रथमेप्रयोगे व्रीह्यनुष्ठाने यवशास्त्रे अप्राप्ताप्रामाण्यस्वीकारः प्रतीतप्रामाण्यत्यागः व्रीहिशास्त्रे च प्राप्ताप्रामाण्यत्यागः अप्राप्तप्रामाण्यस्वीकारश्च प्रयोगान्तरे यवानुष्ठाने व्रीहिशास्त्रे अप्राप्ताप्रामाण्यस्वीकारः प्राप्तप्रामाण्यत्यागः यवशास्त्रे च प्राप्ताप्रामाण्यत्यागः अप्राप्तप्रामाण्यस्वीकारश्चेत्यष्टदोषो विकल्पः सचायुक्त इतिभावः।

अत्रेदमाभाति—सर्वत्र नञर्थस्यान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिः अन्यथा नीलघटवति नेह घट इत्यत्यन्ताभावव्यवहारस्य, नीलघटो न घट इत्यन्योन्याभावव्यवहारस्य चापत्तिः, न च पदार्थैकदेशस्य(१) घटत्वस्य कथमभावान्वयः। अभावस्यैव घटेन समन्वये घटत्वावच्छिन्नप्रतियोगितायाः संसर्गत्वात्। सा च विलक्षणप्रतियोगिताविशेष इति केचित्। यत्रानुयोगिवाचकपदे सप्तमी तत्रात्यन्ताभावबोधः, यत्र प्रथमा तत्रान्योन्याभावबोध इति व्युत्पत्तिमाहुः।

परे तु तादृशव्युत्पत्ते 'न पचति चैत्र' इत्यादावत्यन्ताभावप्रत्यये व्यभिचारात्, एवं वाच्यं—नञ्समभिव्याहाराभावे यत्पदार्थयोराधाराधेयभावसंसर्गेणान्वयस्तत्रात्यन्ताभावप्रत्ययः ( यत्राभेदसंसर्गेणान्वयस्तत्रान्योन्याभावप्रत्ययः ) इति। एवं च चैत्रः पचतीत्यादावाख्यातार्थयत्नस्य समवायेन चैत्रे भानम्। न पचतीत्यत्र यत्नाभावः तत्सम्बन्धावच्छिन्न एवाधाराधेयभावनियामकस्वरूपसम्बन्धेन चैत्रे भासत इति।

(२)एवं चैत्रस्य धनमित्यत्रापि षष्ठ्यर्थस्वामित्वस्य धने निरूपकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावो विशेषणतया भासते।

यदि तु (३)स्वत्वं षष्ठ्यर्थस्तदा चैत्रनिरूपितस्वत्वाभाव आश्रयतासम्बन्धेन भासत इति।

एवं नञ्समभिव्याहाराभावे यादृशप्रतियोग्यनुयोगिवाचकपदयोर्विरुद्धविभक्त्यनवरुद्धयोरभेदान्वयव्युत्पत्तिः तत्समभिव्याहृतनञाऽन्योन्याभावबोधः। अत एव समानविभक्तिकप्रतियोग्यनुयोगिवाचकसमभिव्याहृतनञ्पदजन्यबुद्धिविषयत्वमन्योन्याभावलक्षणमित्याहुः।

अन्ये तु भूतले न घटः, घटो न पट इत्यत्र भूतलाधिकरणको घटप्रतियोगिकोऽभावः घटप्रतियोगिकभेदवान् पट इति बोधः। यत्र तु घटो नास्ति घटपटौ न स्त इति क्रियासमभिव्याहारस्तत्र लडर्थवर्तमानत्वेन नञर्थान्वयः, तत्रैव च भूतलाधेयत्वान्वयः, एकत्वान्वयस्तु प्रथ-

( १ ) पदार्थैकदेशस्येति। घटत्वस्य घटेऽन्वयात् एकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणतयाऽन्वयायोग इति न्यायविरोधात् घटत्वस्याभावेऽन्वयो न युज्यते इति भावः। संसर्गत्वादिति। अर्थाद् घटे एवान्वितस्य घटत्वस्याभावे धर्मिपारतन्त्र्येणान्वय इति भावः।

( २ ) प्रतियोगिवृत्तिधर्मस्य संसर्गताभ्युपगच्छतां प्राचीनानां मतेनाह—एवं चैत्रस्येति।

( ३ ) वृत्त्यनियामकसम्बन्धस्य प्रतियोगितानवच्छेदकत्वादिदं मतमयुक्तमित्याशयेनाह—यदि त्विति।

मान्तघटपदार्थे, तथा च भूतलवृत्तिवर्तमानत्वाभावाश्रय एकत्वाश्रयो घटः, भूतलवृत्तिवर्तमानत्वाभाववन्तौ द्वित्वावाच्छन्नौ घटपटाविति बोधः। एवं जातौ सत्ता नास्तीत्यत्र सत्ताभावो जाताविति बोधो जात्याधेयः सत्ताभाव इति वा बोध इत्याहुः।

अत्र च सर्वत्र प्रातिपदिकार्थे नञर्थे घटपटादीनामभेदातिरिक्तेन-प्रतियोगित्वसम्बन्धेनान्वयः। निपातेषु (१)भिन्नव्युत्पत्तिस्वीकारा-दितिकेचित्। घटपदस्य घटप्रतियोगिके लक्षणाङ्गीकारे न कोपि-दोष(२) इति दिक्(३)।

इति भाट्टचिन्तामणौ नञर्थवादः।

उपसर्गरूपा निपातरूपाश्चोपशब्दाः(४)।

प्र, परा, अप, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उद्, अभि, प्रति, परि, उप,

इत्युपसर्गा द्वाविंशतिः। एतद्भिन्ना नञादयो निपाताः। प्रादीनां च धातुसमभिव्याहार एवोपसर्गत्वं निपातत्वं(५)च। तत्रापि कश्चिद्धात्व-र्थमतिक्रम्य वर्त्तते, कश्चित्तमेव विशिनष्टि यथा प्रस्थानं पराजयः

---

(१) भिन्नव्युत्पत्तीति। नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्न इति व्युत्पत्तेः निपातातिरिक्तविषयकत्वस्वीकारादित्यर्थः।

(२) दोष इति। तथा च निपातातिरिक्तत्वविशेषणमुक्तव्युत्पत्तौ न देयमितिभावः।

(३) दिगिति। दिगर्थस्तु-भूतले न घट इत्यतस्तात्पर्यवशात् भूतलवृत्तिर्घटाभाव इति बोधस्येव भूतलवृत्तित्वाभाववान् घट इति बोधोऽप्यनुभवसिद्धः अन्यथा भूतले घट इति वाक्यजन्यं भूतलवृत्तितावान् घट इति बोधं प्रति भूतले न घट इति वाक्यजन्यबोध-स्य ग्राह्याभावानवगाहित्वेन विरोधित्वं न स्यात् एवं च नञर्थाभावस्य स्वरूपसम्बन्धेन घटेऽन्वयादुक्तव्युत्पत्तौ निपातातिरिक्तत्वविशेषणमावश्यकं ततश्च तेनैव सिद्धौ घटपदस्य घट प्रतियोगिके लक्षणायां मानाभावः। न च भूतले न घट इत्यत्रापि नञोऽभाववति लक्षणया घटेऽभेदान्वय एवेति वाच्यम् तथा सति सर्वत्राभाववत एव नञर्थतया मुख्यर्थपरनञो दुर्ल-भत्वापत्तेः। अभाववतोऽभेदान्वयबोधोपगमेन भूतले घट इति वाक्यजबोधे भूतलं न घट इति वाक्यजन्यबोधस्याविरोधितापत्तेश्च लाघवात् स्वरूपसम्बन्धेन ग्राह्याभावनिश्चयस्यैव विशिष्टबुद्धिविरोधित्वादिति।

(४) उपशब्दाः-द्योतका इत्यर्थः। शब्दाः वाचकाः।

(५) निपातत्वं चेति। उपसर्गाः क्रियायोगे इति पाणिनिस्मरणेन क्रियायोगे एव निपात-त्वोपसर्गत्वयोर्विधानात् निपातसंज्ञा तु प्रादीनां क्रियायोगाभावेऽपि प्रादय इति सूत्रेण भव-तीत्यवगन्तव्यम्। द्योतका इति। द्योतकत्वं च स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वम्।

प्रवेशो विजय इति । अत्र गमनजयाभावादुपसर्गार्थौ, प्रविशतीत्यादौ तन्निष्ठः प्रकर्षः विजयत इत्यादौ जयत्यर्थे विशेषः । चादिनिपातानां केषां चित्केवलप्रयोज्यत्वेपि सहप्रयुज्यमानपदार्थान्वयित्वं तदर्थानाम् । यथा–

तटस्थः स्वानर्थान्घटयति च मौनं च भजते ।
विकारः कोप्यन्तर्जडयति च तापञ्च कुरुते ॥

इत्यादौ लोके, मैत्रावरुणः प्रेष्यति चान्वाहेत्यादौ वेदे, समुच्चयः । चार्थो भावनान्वयी, घटं च पटं चानयेत्यादौ लोके यदग्नये प्रजापतये चेत्यादिवेदे चोपपदार्थान्वयित्वं, तेनाग्निनिरूपितसमुच्चयस्य प्रजापतौ विशेषणत्वेन समुच्चयस्य भावनान्वयाभावेन न विधिः, किं तु समुच्चयविशिष्टप्रजापतिविधिः । न चैवं गौश्चाश्वश्च इत्यत्र दक्षिणोद्देशेन समुच्चयविधिर्न स्यात् । इष्टापत्तेः । विशिष्टदक्षिणाविध्यङ्गीकारात् । तस्याश्च ऋत्विग्भ्यो ददातीति विनियोगश्चमलाध्वर्युभ्यावृत्त्यर्थः । एतच्च दशमे(१) स्फुटम् ॥

तत्रोपसर्गा द्योतका न वाचकाः । प्रजयतीत्यादौ प्रकृष्टजयादौ जिधात्वादेर्लक्षणयैवोपपत्तेः, तत्र शक्तिकल्पने गौरवात् । प्रतितिष्ठत-इत्यत्र गमने प्रशब्दार्थे विभक्त्यर्थानन्वयप्रसङ्गात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् । न चैवं नञोप्यभावे शक्तिर्न स्यादिति वाच्यम् । भूतलं न घट इत्यत्र घटपदलक्षितभेदस्य नामार्थयोर्भेदान्वयाव्युत्पत्त्या भूतलेऽनन्वयापत्तेः । भेदस्य नञर्थत्वे तु निपातार्थातिरिक्ते तन्नियमान्न भेदान्वयानुपपत्तिः । न च घटपदस्य घटभिन्ने लक्षणया भूतलेनान्वयोस्त्विति वाच्यम् । भेदप्रकारकबोधस्यानुभाविकत्वा(२)दिति केचित्(३) ॥

अन्ये तु धातौ शक्तिलक्षणयोरुपसर्गसमभिव्याहारतदभावहेतुकत्वस्य उपसर्गाणां द्योतकत्वशक्तेश्च कल्पनायां गौरवाद् वाचकतैव युक्ता ।

---

(१) ज्योतिष्टोमे श्रूयते 'गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति । तत्र किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतसंख्या-उतैकस्य यस्य कस्य चिद् गोर्वेति सन्दिह्य प्रथमातिक्रमे मानाभावात् गोरेव द्वादशशतशतसंख्येति सिद्धान्तितम् अ० १० । पा० ३ । अ० ११ ॥

(२) आनुभविकत्वादिति । घटाभिन्नलक्षणायां तु घटभिन्नाभिन्नः पट इति बोधः स्यात् इष्यते च घटाभिन्नः पट इत्येव बोध इति भावः ।

(३) केचिदिति । एतत्सर्वं नञर्थवादे दिगर्थनिरूपणव्याजेन मया प्रदर्शितम् ।

एवं चैवकारादावन्ययोगव्यवच्छेदायोगव्यवच्छेदयोरिवकारादीनां सा-दृश्यादौ शक्तिप्रदर्शनमुपपन्नम् । अत एवात्र ह्येवावपन्त्यत एवोद्व पन्तीति वैदिकप्रयोगस्य, तत्रैवायाति इत एवाभिवर्त्तत इति लौकिक-प्रयोगस्य, चोपपत्तिरतो वाचकत्वमित्याहुः ।

त्वतलादिभावप्रत्ययानां घटत्वं पटत्वमित्यादौ घटत्वत्वेन घटत्वा-दिकमर्थः । (१)घटत्वत्वं च घटेतरासमवेतत्वे सति घटनिष्ठान्योन्याभा-वप्रतियोगितानवच्छेदकत्वे सति समवेतत्वम् । अत्रेतरत्व, समेवतत्वा, भाव, निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वा, भाव, समवेतत्वे षट् शक्तयः । संसर्गः समभिव्यहारलभ्यः । सत्त्वमित्यादावेकदेशे लक्षणा । तत्र सदितरासमवेतत्वस्याप्रसिद्धेः । एवं प्रमेयत्वमित्यत्रापि । एवम-न्यत्राप्यूह्यम् ।

के (२)चित्तु—भावप्रत्ययस्य धर्मत्वेन धर्मे शक्तिः । धर्मत्वमाधेयत्वं शक्यतावच्छेदकं, शक्तावच्छेदकं तु त्वतलत्वादिकं न भावप्रत्ययत्वम् । घटत्वमित्यादौ घट(३)धर्म इति बोधः । पटे घटत्वं नास्तीत्यत्र तु नञ

(१) तदितरावृत्तित्वे सति सकलतद्वृत्तित्वम् भावप्रत्ययप्रवृत्तिनिमित्तम् । उभयत्र वृत्तित्वं प्रकृत्यर्थतावच्छेदकतावच्छेदकसम्बन्धेन बोध्यम् समवेतत्वकथनं तु प्रकृताभिप्रायेण । प्रकृ-त्यर्थमन्तर्भाव्य त्वप्रत्ययार्थनिर्वचने शक्त्यानन्त्यम् अतः इतरावृत्तित्वे सति वृत्तित्वम् प्रवृत्तिनिमित्तम् । सत्त्वमित्यत्र समवायेन तदितरावृत्तित्वाप्रसिद्धया नोक्तं प्रवृत्तिनिमित्त सम्भवीत्यत आह—घटनिष्ठेति । तादितरासमवेतत्वं तादितरत्वव्यापकत्वरूपं ग्राह्यं न तु यथा श्रुतमिति भावः सामान्यत इतरत्वव्यापकत्वस्य केवलान्वयिमात्रवृत्तित्वेन घटत्वादौ द्वितीय दलस्य बाधः अतः इतरत्वादौ भावप्रत्ययस्य खण्डशः शक्तिः । एवं वृत्तिमद्भेदप्रतियोगि तानवच्छेदकत्वरूपप्रथमदलमपि प्रमेयत्वाद्यनवच्छिन्ने तत्र बाधितमिति तत्र खण्डशः शक्तिः ।

( २ ) पूर्वोदीरितपक्षापेक्षया लाघवमभिप्रेत्याह—केचित्त्विति । धर्मत्वं च प्रकृत्यर्थता वच्छेदकताघटकसम्बन्धेन सम्बद्धत्वम् ।

( ३ ) घटधर्म इति बोध इति । ननु द्रव्यत्वस्यापि घटधर्मतया घटत्वमित्यत्र द्रव्यत्वबोधः कुतो न, नचायं दोषः पूर्वोदीरितपक्षेऽपि समान इति वाच्यम् तदितरावृत्ति-त्वेन भासमाने धर्मे तत्तत्प्रकृत्यर्थतावच्छेदकनिष्ठाधेयतासम्बन्धेन प्रकृत्यर्थस्यान्वयोप गमेन पूर्वोदीरितपक्षे दोषाभावादिति चेन्न—धर्मत्वेन धर्मे शक्तिमतेऽपि प्रकृत्यर्थताव-च्छेदकनिष्ठाधेयतानिरूपितत्वसम्बन्धेन धर्मत्वे प्रकृत्यर्थस्यान्वयोपगमेन दोषाभावात् ।

न च लाघवेन घटत्वादिनिष्ठाधेयतासम्बन्धेन घटादेः धर्मे एवान्वयोऽस्तु किमिति घटत्वनिष्ठाधेयतानिरूपितत्वसम्बन्धेन धर्मत्वे घटादेरन्वयः स्वीक्रियते इति वाच्यम् । प्राचीनैर्घटस्य सिद्धतया नीलघटो घट इति यथा नेष्यते तथा आधेयत्वस्य सिद्धतयाऽ-सिद्धनिरूपितत्वसम्बन्धेनैवान्वय इत्याशयात ।

र्थस्य घटमात्रवृत्तित्वविशिष्टभावप्रत्ययार्थे धर्मेऽन्वयः। भावप्रत्ययसमभिव्याहृतनञः प्रकृत्यर्थमात्रवृत्तित्वविशिष्टप्रतियोगिताकाभावबोधकत्वव्युत्पत्तेः। एवं समासाद्युत्तरभावप्रत्ययेपि नीलोत्पलत्वमित्यत्र नीलोत्पलधर्म इति बोधः। समासोत्तरभावप्रत्ययस्य प्रकृत्यर्थवृत्तित्वविशिष्टधर्मबोधकत्वव्युत्पत्त्या न रक्तोत्पले नीलोत्पलत्वमिति बोध इत्याहुः।

(१)अन्ये तु कृत्ताद्धितसमासोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्ये शक्तिः, लोके पाचकत्वमौपगवत्वं नीलोत्पलत्वमित्यादौ वेदे च वैश्वदेवीत्वं निषादस्थपतित्वमित्यादौ पाककृतिपुरुषत्वयोरुपगुसम्बन्धित्वापत्यत्वयोर्नीलत्वोत्पलत्वयोर्विश्वदेवदेवताकत्वामिक्षात्वयोर्निषादत्वस्थपतित्वयोः समानाधिकरण्यस्य विशेषणतया भानादिति॥

(२)अन्ये तु सामानाधिकरण्यस्योत्तरपदार्थतावच्छेदकविशेषणतया भानम्। सामानाधिकरण्यमात्रे शक्तिः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्। प्रत्ययार्थप्राधान्यनियमस्य भावप्रत्ययार्थातिरिक्तपरत्वात्तेन नीलत्वसमानाधिकरणमुत्पलत्वमिति बोध इत्याहुः॥

परे तु नीलादिपदस्य तत्समवायिनि लक्षणा। अभेदः संसर्गः। नीलत्वसमवाय्यभिन्नसमवेतोत्पलत्वमिति बोध इत्याहुः॥

वैश्वदेवीत्यादितद्धितस्य देवतात्वविशिष्टे सर्वनामार्थे शक्तिः, सर्वनामार्थश्च बुद्धिस्थप्रकारविशेषावच्छिन्नं पयस्त्वादि, एवं च प्रातिपदिकार्थविश्वदेवानां देवतात्वे देवतात्वस्य च निरूपकत्वेन सर्वनामार्थद्रव्यविशेषत्वेऽन्वयः। ससम्बन्धिकत्वादेकदेशान्वयेपि न दोषः। आमिक्षापदे तु प्रकारविशेषोपस्थापने तद्धितस्य तात्पर्यग्राहकत्वमिति प्राञ्चः।

केचित्तु तद्धितस्य सर्वनामार्थे शक्तिर्देवतात्वे तु निरूढलक्षणा, कृत्प्रत्ययानामाश्रयवाचिनां (३)कृताविव विश्वदेवप्रातिपदिकार्थस्य ल-

---

(१) यज्ञपत्युपाध्यायमतमाह—अन्येत्विति। तथाच दाधितिः कर्मधारयोत्तरभावप्रत्ययस्य पदार्थतावच्छेदकद्वयसामानाधिकरण्यवचनत्वादिति। सम्बन्धसम्बन्धस्यापि विशिष्टधीविषयतायाः प्राचीनैरुपगमेन नीलोत्पलमिति पदजन्यबोधे नीलत्वसमानाधिकरणवदुत्पलमिति बोधान्नीलोत्पलत्वमित्यादौ नीलत्वोत्पलत्वयोः सामानाधिकरण्यमिति बोधः।

(२) ननु उत्पलत्वनिष्ठनीलिमादिसामानाधिकरण्यस्य प्रकृत्यर्थावृत्तितया न भावप्रत्ययार्थत्वसम्भव इत्यपरितोषादाह—अन्येत्विति।

(३) कृताविवेति। पाचक इत्यत्र विक्लित्यनुकूला भावना विक्लित्तिर्वा पचधात्वर्थः आश्रयः प्रत्ययार्थः कृतौ च प्रत्ययस्य निरूढलक्षणा तद्वदिति भावः।

क्षितदेवतात्वेऽन्वयो व्युत्पत्तिवैचित्र्यादित्याहुः ।

अन्ये तु तद्धितार्थो द्रव्यविशेष एव, देवतात्वं तु प्रातिपदिकार्थतद्धितार्थयोः संसर्ग इत्याहुः ॥

परे तु देवतात्वमेव तद्धितार्थः, सर्वनामार्थस्य व्यक्तिन्यायेन(१) बोध इत्याहुः ॥

अपरे तु तद्धितेनानिर्धारितविशेषद्रव्यसामान्यप्रतीतेर्न द्रव्यविशेषवाचित्वं, किं त्वामिक्षापदादेव विशेषनिर्णय (२)इत्याहुः ॥

देवतात्वबोधकानि च देवताशब्दस्तद्धितश्चतुर्थी द्वितीया मन्त्रवर्णश्चेति, देवतास्तर्पयति प्रजापतिर्ब्रह्मा देवता इत्यादौ रात्रिदेवतामेके नक्षत्रदेवतामेके इत्यादौ च द्रव्यत्यागोद्देश्यत्वरूपदेवतात्वस्य देवतापदवाच्यस्यान्वयः । धात्वर्थत्यागांशोऽनुवादः । एवमाग्नेय इत्यादितद्धितस्य देवतात्वविशिष्टद्रव्यविशेषवाचित्वम् । न च द्रव्यविशेषवाचित्वमसिद्धमिति वाच्यम् । बुद्धिस्थप्रकारावच्छिन्नबोधकसर्वनामार्थे सास्यदेवतेति तद्धितविधेः । एवं च तद्धितस्य देवतात्वविशिष्टे बुद्धिस्थप्रकारे ऽष्टाकपालत्वादौ तद्व्यक्तित्वादौ वा शक्तिस्तदवच्छिन्नस्य तु व्यक्तिन्यायेन लाभः । बुद्धिस्थत्वेन भानाभावात्तु न बुद्धिस्थत्वे शक्तिः । तेषां प्रकाराणां नानात्वेपि बुद्धिस्थत्वस्योपलक्षणत्वेन शक्तिग्रहसम्भवः, शक्तिग्रहोपलक्षणस्य न शक्यतावच्छेदकत्वमिति दिक् ।

तदादिपदानां बुद्धिस्थत्वेन बुद्धिस्थे शक्तिः । न च बुद्धिस्थमानयेति बोधापत्तिः, पदार्थस्मरणशाब्दबोधयोः समानप्रकारकत्वनियमादिति वाच्यम् । पदान्तरे तादृशनियमेऽपि तदादिपदेषु घटत्वादिरूपेणैव पदार्थोपस्थितेः शाब्दबोधस्य च कल्पनं फलानुरोधादिति केचित् ।

अन्ये तु तदादेर्घटत्वादिनैव शक्तिरिति नानार्थतैवे(३)त्याहुः ।

---

(१) व्यक्तिन्यायेनेति । यथा आकृतौ शक्तिः व्यक्तेस्त्वाक्षेपाद्भानम् तथा सर्वनामार्थस्य आमिक्षादेराक्षेपाद्भानम् ।

(२) इत्याहुरिति । अमुमर्थमेवाहुर्वैयाकरणभूषणकृतः ।

'देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ।
प्रदेय एव वा शक्तिः प्रकृतेस्त्वस्तु लक्षणा ॥
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥ इति ।

(३) इत्याहुरिति । न च नानार्थतोपगमे यद्रूपावच्छिन्नविषयकव्यवहारजनकत्वं येन पुंसा तदादिपदे न गृहीतं तेन तच्छक्यग्रहेण प्रकान्तस्यापि तदवच्छिन्नस्य तत्पुरुषीयतदादिपदजन्यबोधविषयत्वानुपपत्तिरिति वाच्यम् बुद्धिस्थत्वं प्रकारीभूतघटत्वादीनाम-

त्वंपदस्य तत्कालीनसम्बोध्यत्वविशिष्टचैत्रादावस्मत्पदस्य तत्काली-नस्वतन्त्रोच्चारयितृत्वविशिष्टचैत्रादौ शक्तिः, स्वातन्त्र्यं चान्यबोधता त्पर्येणानुच्चारयितृत्वं, तेनान्यतात्पर्येणोच्चारिते 'वाच्यस्त्वया मद्वच-नात्स राजे'(१)त्यादौ लक्षणया सीताप्रतीतिः, न कविप्रतीतिरुच्चारयितृ-प्रतीतिर्वा । अत्रापि सम्बोध्यत्वादिकं न भासते भासते चेति। वयं याम इत्यत्र स चाहं च त्वं च वयमित्येकशेषादन्यतात्पर्यकेपि सर्वस्यारोपि तत्स्वातन्त्र्यप्रतीतिः ।

एवमिदमवच्छिन्नेऽदः पदस्य शक्तिः ।

यत्किञ्चिच्छब्दस्य पर्याप्तिसम्बन्धेन बुद्धिविषयत्वविशिष्टघटत्वाद्य-वच्छिन्ने शक्तिः । यत्किञ्चित्प्राचीनमग्नीषोमीयाद् यत्किञ्चित्सोमलिप्त-मित्यादौ तथैव बोधात् । अत एव शक्यतावच्छेदकतावच्छेदकस्य वि-षयत्वस्यैक्यान्न वाक्यभेदः, यत्किञ्चिदानयेत्यादौ तु पर्याप्तिसम्बन्धेनो-पेतबुद्धिविषयत्वविशिष्टे लक्षणा ।

केवलकिञ्चित्पदस्याज्ञातप्रकारावच्छिन्ने शक्तिः ।

एवं सर्वपदस्य पर्याप्तिसम्बन्धेन बुद्ध्यवच्छिन्ने शक्तिः । सर्वेषु घ-टेषु द्रव्यत्वमित्यत्र घटपर्याप्तिभानं, सर्वेषु रूपमित्यत्र व्यापकत्वे लक्ष-णा । कस्यापि रूपस्य सर्वघटवृत्तित्वाभावात् । सर्वेषु सत्त्वं प्रमेयत्व-मित्यादौ भेदप्रतियोगितानवच्छेदकत्वे लक्षणा । एवं सर्वेभ्यो दर्शपूर्ण मासौ सर्वं ब्रह्मणे परिहरतीत्यादावपीति दिक् ॥

क्त्वाप्रत्ययस्य समानकर्तृकत्वे पूर्वकालत्वे च शक्तिरिति वै(२)याकरणाः। नैयायिकास्तु भुक्त्वा व्रजतीत्यादौ भोजनोत्तरकालीनं व्रजनमिति

---

नुगमकमाश्रित्यं बुद्धिप्रकारवाँस्तत्पदशक्य इत्याकारकशक्तिग्रहस्य सामान्यलक्षणाप्रत्या सत्त्या तद्धर्मप्रकारेण सकलधर्मविषयकस्य सम्भवेन अपूर्वप्रकारेण बोधानुपपत्तेरभावात ।

(१) वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य तत्किं सदृशं कुलस्य ॥

इति रघुकाव्ये कालिदासः ।

(२) वैयाकरणा इति । समानकर्तृकयोः पूर्वकाले इति सूत्रादिति शेषः, अन्यथा ओदनं पक्त्वाऽहं भोक्ष्ये इत्यत्र पाककर्तृत्वस्यानुक्तत्वात् मयेति–तृतीया स्यादिति भावः । वस्तु तस्तु 'अव्ययकृतो भावे' इति स्मरणात् क्त्वाप्रत्ययस्य भाव एव शक्तिः समानकर्तृकत्वं पूर्वकालत्वं च संसर्गमर्यादयैव भासते न तु तत्र क्त्वाप्रत्ययस्य शक्तिः । मयेति तृतीयापत्ति-स्तु न पाककर्तृत्वस्यानुक्तत्वेऽपि भुजिकर्तृत्वस्योक्तत्वेन पाककर्तृत्वस्यापि उक्तत्ववद्भानात् । तथा च हरिः—

बोधादुत्तरकालत्वं समानकर्तृकत्वे च शक्तिरिति।

समानकर्तृकत्वं समभिव्याहृतधात्वर्थजनकव्यापारयोरेकनिष्ठत्वं, तेन रथो गत्वा तिष्ठतीत्यादिप्रयोगः।

उत्तरकालत्वं च तात्पर्यविषयीभूताव्यवधानविशिष्टं बोध्यम्। तेनाद्य गत्वा श्वस्तिष्ठतीत्यादिप्रयोगः।

मुखं व्यादाय स्वपितीत्यादौ समानकर्तृकत्वमात्रे सामानाधिकरण्ये वा लक्षणा।मुखं व्यादत्त इति वैपरीत्येन बोध इति कश्चित्। दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यादौ त्वव्यवहितत्वभानमिति दिक्।

आयुधपदस्य युद्धसाधनत्वे शक्तिः। साधनत्वमात्रे लक्षणा। स्तोमपदस्य स्तोत्रसाधनऋक्समुदाये शक्तिः। त्रिवृदादिपदानामभ्याससाध्यनवत्वविशिष्टऋक्समुदाये शक्तिः। त्रिवृद्बहिष्पवमानमित्यत्रानभ्यस्ते लक्षणा। एवं पञ्चदशादिपदानां संस्थापदस्य तद्विषयकव्यापारोपरमे शक्तिः। आरम्भपदस्याद्यपदार्थे शक्तिरिति केचित्। आद्यप्रवृत्तौ शक्तिरित्यन्ये। आद्यत्वं तत्समानविषयकप्रवृत्तिध्वंसव्यधिकरणत्वम्। एवमन्यदूह्यम्॥

इति श्रीगागाभट्टकृतभाट्टचिन्तामणौ शब्दखण्डः॥

## धर्मे वेदप्रामाण्याधिकरणम्।

**"औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशो व्यतिरेकश्चार्थे ऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात्" ॥ ५ ॥**

---

'प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते॥' इति।

स्पष्टं चेदं भूषणे।

---

## अथ वृत्तिः।

**अथातो धर्मजिज्ञासा॥१॥**

(१) अथ गुरुकुलवासपुरस्सरं साङ्गवेदाध्ययनानन्तरम् अतः वेदाध्ययनस्य अर्थज्ञानरूपदृष्टफलकत्वाद्धेतोः धर्मजिज्ञासा वेदार्थरूपस्य धर्मस्य विचारः कर्तव्यः॥१॥

**चोदनालक्षणोऽर्थो धर्मः॥ २ ॥**

(२) चोदना विधायकवाक्यं लक्षणं प्रमाणं यस्य स चोदनालक्षणः अर्थः पुरुषैरर्थ्यमानः यः सः धर्मः॥२॥

एवं प्रत्यक्षादिलक्षणकथनेन तेषां धर्माधर्मप्रमायामकारणत्वमित्युक्तम् । इदानीं चोदनासूत्रप्रतिज्ञातस्य विधिप्रामाण्यस्य परीक्षा क्रियते कारणदोषबाधकज्ञानरहितमगृहीतग्राहिज्ञानं प्रमेति पूर्वमुक्तम् । विधिजन्यज्ञाने तथात्वमस्ति न वेति चिन्ता ।

तत्र पूर्वः पक्षः—नैतादृशप्रमाजनकत्वं विधीनां सम्भवति, स्वर्गाद्यामुष्मिकफलककर्मबोधकानामपूर्वकल्पकार्थापत्तिरूपप्रमाणसापेक्षतया निरपेक्षतज्जनकत्वरूपप्रामाण्यासम्भवात् । ऐहिकफलकचित्रादिकर्मबोधकानामपि प्रत्यक्षादिप्रमाणान्तरेण बाधात् । न हि तत्रापि द्वारभूताहष्टकल्पनं, मानाभावात् । कारीर्यादौ तात्कालिकफलदर्शनात् हिरण्यधारणस्य भ्रातृव्यदुर्वर्णत्वजनने दृष्टद्वारत्वसम्भवे तत्कल्पनायोगाच्च । अतो न बाधकराहित्यम् । स एष यज्ञायुधी यजमानो ऽञ्जसा स्वर्गं लोकं यातीति यज्ञायुधपदवाच्यस्फ्यादिसंयोगविशिष्टस्य यजमानशरीरस्य दाहेन भस्मीभूतस्य स्वर्गलोकगमनवादस्याशक्यपरिहारः प्रमाणान्त-

---

## धर्मे वेदप्रामाण्याधिकरणम् ।

### तस्य निमित्तपरीष्टिः ३

( ३ ) **तस्य** धर्मस्य यत् **निमित्तं** ज्ञानकरणं तस्य **परीष्टिः** परीक्षा प्रस्तूयते॥ ३॥

## धर्मे प्रत्यक्षाद्यगम्यत्वाधिकरणम् ।

**सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमविद्यमानोपलम्भत्वात् ॥ ४ ॥**

( ४ ) **इन्द्रियाणां** चक्षुरादीनां सति वर्तमाने विषये सम्प्रयोगे सन्निकर्षे सति **पुरुषाणां बुद्धेः जन्म** ज्ञानोत्पत्तिः यत् भवति **तत्** तादृशं **प्रत्यक्षं अनिमित्तं** न धर्मप्रमितिकारणं **विद्यमानोपलम्भनत्वात्** इन्द्रियाणां वर्तमानवस्तुमात्रप्रत्यायकत्वात् भाविनमपि धर्मं प्रमाणेन प्रतीत्य पुरुषाणां प्रवृत्तेरनुभूयमानत्वादिति भावः ॥ ४ ॥

## धर्मप्रमाणपरीक्षाधिकरणम् ।

( ५ ) **शब्दस्य** वाचकस्य **अर्थेन** वाच्येन सह **सम्बन्धः** वाच्यवाचकभावरूपः **औत्पत्तिकस्तु** स्वाभाविक एव न साङ्केताद्यधीनः, **उपदेशः** आप्तोपदेशः **तस्य** तादृशसम्बन्धस्य **ज्ञानं** ज्ञानसाधनम् , आप्तोपदेशः न तादृशसम्बन्धस्य कारकः अपि **तु** ज्ञापक एवेति भावः । यतः **अनुपलब्धे** प्रत्यक्षादिप्रमाणानधिगते अर्थे चोदनाप्रतिपाद्ये **अव्यतिरेकः** व्यतिरेकस्य प्रामाण्यव्यतिरेकहेतोरव्यभिचारस्याभावः वर्तते **तत्** तस्मात् **चोदना प्रमाणमिति बादरायणस्य** अनुमतम् **अनपेक्षत्वात्** अप्रामाण्यशङ्काहेतुभूतस्य सङ्केतयितृपुरुषादिसापेक्षत्वस्याभावात् ॥ ५ ॥

रविरोधः। किं चात्र कारणदोषो ऽप्यस्ति। तथाहि—विधिस्थसोमादिपदानां स्वार्थेन संयोगतादात्म्यादिसम्बन्धासम्भवात् प्रत्यायकत्वं सम्बन्धः। तच्च 'अयं शब्दो ऽस्य वाचक'इति पुरुषान्तरोपदेशाधीनमेवार्थज्ञानम्। एवं च विधिवाक्यार्थज्ञानस्य पुरुषोपदेशाधीनत्वेन पुरुषाणां च भ्रान्त्यादिसम्भवेन कारणदोषवत्त्वम्। न च पदपदार्थयोर्नित्यः स्वाभाविकः सम्बन्धः सम्भवति। प्रथमश्रवणे ऽप्यर्थप्रत्ययप्रसङ्गात्। आधुनिकैः पुरुषैरिदं पदमत्र शक्तमिति व्यवहारकरणाच्च। न चाधुनिकैः पुरुषैर्नित्यस्य सम्बन्धस्योपदर्शनेऽपि न तत्कल्पनमिति वाच्यम्। आधुनिकैरकल्पनेपि सर्गाद्यकालिकपुरुषेण तत्कल्पनासम्भवः। न च सर्गादौ मानाभावः। "स ऐक्षत बहु स्यां प्रजायेय" इति "नासदासीन्नो सदासी"दिति श्रुतेरेव मानत्वात्। तथा च—सर्गादौ भगवता स्थावरं जङ्गमं जगत् धर्माधर्मौ च सृष्ट्वा व्यवहाराय तत्तच्छब्दानां तेन तेनार्थेन सम्बन्धं कल्पयित्वा धर्माधर्मप्रतिपादकपदे वेदान्कल्पयित्वा हिरण्यगर्भादिभ्यः प्रतिपादितास्तैरन्येभ्य इत्येवमुत्तरोत्तरं शब्दार्थप्रतीतिरिति॥

सिद्धान्तस्तु प्रथमे श्रवणे ऽर्थप्रत्ययाभावस्य नित्यसम्बन्धानवगममूलकत्वेनोपपत्तेरीदृशार्थकल्पने मानाभावात्। सर्गत एकरूपस्यानुभवसिद्धत्वेन सर्गादौ नाशाभावान्मन्त्रार्थवादेतिहासपुराणानामपि पौरुषेयसम्बन्धापेक्षितया पौरुषेयतया च शाक्यग्रन्थवदतीन्द्रियार्थे प्रामाण्यासम्भवेनाप्रमाणप्रतिपादितसर्गादेर्दूरापेतत्वात्। अतो न सर्गादिकाले पदपदार्थसम्बन्धकरणं सम्भवति। किं च सर्वपदानामर्थानां च सम्बन्धसिद्धौ वाक्येन तत्सम्बन्धकरणं स्यात्। अज्ञातार्थसम्बन्धकपदघटितवाक्येन तदसम्भवात्। न चैवं श्रोतॄणामप्रसिद्धसम्बन्धत्वात्सम्बन्धविशेषकथनमप्यनुपपन्नमिति वाच्यम्। सतः सम्बन्धस्योपायाभावादज्ञातस्य वाक्येन ज्ञापनसम्भवात्। वृद्धव्यवहारेणैव सम्बन्धज्ञानसम्भवे तज्ज्ञापकवाक्यकथनस्यानावश्यकत्वाच्च। तस्मान्न पौरुषेयः सम्बन्ध इति सम्बन्धस्य नित्यतया पुरुषापेक्षा नास्तीति सिद्धं चोदनाप्रामाण्यम्।

न च तथापि चित्रादीनामनन्तरफलादर्शनेन विसंवादादप्रामाण्यमिति वाच्यम्। शब्दोक्तसाधनत्वमात्रस्यापूर्वद्वारेण कालान्तरेपि तैलपानवत्सम्भवेनाविसंवादात्। अपूर्वद्वारकत्वस्याङ्गप्रधानमेलनान्यथानुपपत्त्या वाक्यार्थबोधे संसर्गलभ्यत्वात्। पशूत्पत्तिमात्रस्याफलतया

तदुपयोगस्य फलत्वेन तत्पर्यन्तस्यापि द्वारकल्पनावश्यम्भावेनापूर्वबोधाच्च । अतो न विसंवादः ।

न च तथापि स एष यज्ञायुधीत्यत्र दृष्टविरोधादप्रामाण्यमिति वाच्यम् । शरीरशरीरिणामत्यन्तभेदाभावेनैव तत्पदव्यपदेश्यस्य शरीरस्य यज्ञायुधैः परम्परया यज्ञायुधवत आत्मनः स्वर्गगमनलिप्सितभोगोत्पादविरोधाभावात् । फलवाचकफलभोक्तृवाचकपदयोः सामानाधिकरण्यस्य "अग्निं चिनुत ऋध्नोत्येव" "द्विरात्रेण यजते स्वर्गमेव लोकमेती"त्यादौ बहुशो दर्शनात् । एवमत्रापि यजमानः स्वर्गं यातीत्युपपन्नम् । एवं सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्तीति सङ्कल्पनिरूपितकर्तृत्वबोधकषष्ठ्याऽऽत्मनः सङ्कल्पं प्रति कर्तृत्वम् ।

न च व्यापकस्य स्पन्दो न सम्भवतीति वाच्यम्, प्रयत्नद्वारा प्रयोजकत्वसम्भवात् । सर्वधात्वर्थस्य क्रियात्वेन तत्र कर्तृत्वसम्भवाच्चेति । तस्मात्कारणदोषबाधकज्ञानरहितागृहीतग्राहित्वेन वेदप्रामाण्यम् । बादरायणग्रहणं पूजार्थम् ॥

## शब्दनित्यताधिकरणम् ।

**कर्मैके तत्र दर्शनात् ॥ ६ ॥ अस्थानात् ॥ ७ ॥ करोति शब्दात् ॥ ८ ॥ सत्त्वान्तरे च यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥**

---

### वृत्तिः ।

पूर्वाधिकरणोक्तं शब्दार्थयोः सम्बन्धस्य नित्यतामाक्षेप्तुं शब्दस्य नित्यत्वमाक्षिपति—**एके** अक्षपादादयः **कर्म** कार्यं शब्दं मन्यन्ते । कुतः, **तत्र** तस्मिञ्शब्दे विषये कण्ठताल्वादिव्यापारे सत्येव शब्दस्य **दर्शना**दित्यर्थः । 'तदुदितः स हि यो यदनन्तरः' इति न्यायेन पुरुषप्रयत्नानन्तरं शब्दोपलम्भात् पुरुषप्रयत्नजन्यत्वस्य शब्दे निश्चयादिति भावः ॥ ६ ॥ हेत्वन्तराण्याह—**अस्थानात्** अस्थिरत्वात्, नित्यत्वे उच्चारणानन्तरं चिरकालं शब्द उपलभ्येत नचोपलभ्यतेऽतोऽनित्यः ॥ ७ ॥ **करोतिशब्दात्** शब्दं कुरु इति व्यवहारात् घटं कुरु इति वत् ॥ ८ ॥ **सत्त्वान्तरे** प्राण्यन्तरे शब्दस्य प्राण्यन्तरशब्देन सह **यौगपद्यात्** समानकालिकत्वदर्शनात् । अयं भावः शब्दस्य नित्यत्वमते लाघवादेकत्वमप्यङ्गीकार्यम् ततश्च नानादेशेषु युगपदुपलम्भोऽनेकपुरुषैरुच्चारणसमये शब्दस्य भवति स चैकत्वे विरुध्येत एकस्य नानादेशस्थत्वासम्भवादिति ॥ ९ ॥ **प्रकृतिविकृत्योः** दध्यत्रेत्यादौ प्रकृतेरिकारस्य विकृतेर्यकारस्य दर्शनात् 'इकोयणची'ति शास्त्रेण उपदेशाच्चेत्यर्थः ॥ १० ॥ **कर्तृभूम्ना** उच्चारयितृबाहुल्येन **अस्य** शब्दस्य

**समन्तु तत्र दर्शनम् ॥ १२ ॥ सतः परमदर्शनम् विषयानागमात् ॥ १३ ॥ प्रयोगस्य परम् ॥ १४ ॥ आदित्यवद्यौगपद्यम् ॥ १५ ॥ वर्णान्तरमविकारः ॥ १६ ॥ नादवृद्धिपरा ॥१७॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥१८॥ सर्वत्र यौगपद्यात् ॥ १९ ॥ संख्याभावात् ॥ २० ॥ अन-**

---

वृत्तिः ।

**वृद्धिः** महत्वं यतोऽनुभूयतेऽतोऽपि शब्दोऽनित्यः उच्चारणस्य शब्दव्यञ्जकत्वाङ्गीकारे महत्वं न स्यात् व्यञ्जकवृद्ध्या व्यङ्ग्यवृद्धेरदर्शनात् एवं च शब्दार्थसम्बन्धस्य सुतरामनित्यत्वमितिभावः ॥ ११ ॥ सिद्धान्तमाह——**तत्र** ताल्वादिव्यापारे सत्येव शब्दस्य **दर्शनम् समं तु** कार्यत्वनित्यत्वपक्षसाधारणम् ताल्वादिव्यापारस्य व्यञ्जकत्वेऽपि उपपत्तेः हेतोरनैकान्तिकत्वम् ॥ १२ ॥ **सतः** विद्यमानस्यैव शब्दस्य **अदर्शनम् परं** युक्तम् उच्चारणपूर्वोत्तरकालयोः **विषयानागमात्** विषयं शब्दं प्रति व्यञ्जकस्याप्राप्तेः एवं चास्थिरत्वहेतुः स्वरूपासिद्धः ॥ १३ ॥ **परम्** अन्यत् यत् 'शब्दं करोती'ति व्यपदेशरूपं शब्दानित्यत्वे कारणमुक्तम् तत् **प्रयोगस्य** शब्दप्रयोगस्य 'गोमयं कुरु' इति व्यपदेशो यथा गोमयपिण्डविषयकः तथा उपचारात् 'शब्दं कुरु' इति व्यपदेशोऽपि 'शब्दोच्चारणं कुरु' इत्येतद्विषयकः ॥ १४ ॥ **आदित्यवत्** यथाऽऽदित्यस्य एकस्यापि नानादेशेषु युगपदुपलब्धिः तथा एकस्यापि शब्दस्य व्यापकतया नानादेशेषु अनेकपुरुषोच्चारणवशेन **यौगपद्यम्** युगपदुपलब्धिर्न विरुध्यते ॥ १५ ॥ दध्यत्रेत्यादौ इकारस्य यकारो विकृतिरिति नोपदिश्यते इकोयणचीतिशास्त्रेण किन्तु इकारप्रयोगे प्रसक्ते यकारः प्रयोक्तव्य इत्युपदिश्यते तथाच इकाराद्यकारः **शब्दान्तरम् अविकारः** नेकारविकारः शब्दस्य विभुत्वेन द्रव्यान्तराप्रकृतिकत्वादिति । अयं भावः 'सिद्ध तु नित्यशब्दत्वात्' इति कात्यायनस्मरणेन शब्दस्य नित्यत्वे सिद्धे व्याकरणशास्त्रमनर्थकमिति शङ्कायां 'कार्यानिवर्तकत्वात्सिद्धम्' किमिदं कार्यानिवर्तकत्वादिति कार्या बुद्धिः सा निवर्तेत इति व्याकरणभाष्येण बुद्धेरेव निवर्तकं शास्त्रं नत्विकारादेः तथाच दधिशब्दोऽपि नित्यः दध्यशब्दोऽपि तत्र किं क प्रयोक्तव्यमित्येव शास्त्रेण बोध्यते इति ॥ १६ ॥ उच्चारणकर्तृबाहुल्ये या 'महान् शब्द' इति प्रतीतिः सा **नादवृद्धिपरा** नादस्य ध्वनेर्या वृद्धिस्तद्विषयिणी शब्दस्य निरवयवत्वेन वृद्ध्यसंभवात् । एवं शब्दानित्यत्वसाधकहेतूनामन्यथासिद्धिमुक्त्वा स्वमतेन शब्दनित्यतां हेतुभिः साधयति तुरवधारणे शब्दः **नित्य एव स्यात् दर्शनस्य** दृश्यते श्रूयतेऽनेनेति दर्शनमुच्चारण तस्य **परार्थत्वात्** परं प्रति अर्थप्रत्यायनार्थत्वात् शब्दस्य अनित्यत्वे चार्थप्रतिपत्तिपर्यन्तमनवस्थानात् परस्यार्थप्रतीतिरेव न स्यात् ॥ १८ ॥ **सर्वत्र** सकलेषु गोशब्देषु **यौगपद्यात्** 'स एवायं गकार' इति अबाधितप्रत्यभि-

**पेक्षत्वात् ॥ २१ ॥ प्रख्याभावाच्च योग्यस्य ॥ २२ ॥ लिङ्गदर्शनाच्च ॥ २३ ॥**

पूर्वपक्षः ।

ननु कथं पदार्थसम्बन्धस्य नित्यत्वम् , वर्णानामनित्यत्वेन पदानामप्यनित्यत्वात् , तथाहि—वर्णा अनित्याः प्रयत्नानभिव्यङ्ग्यत्वे सति प्रयत्नोत्तरमुपलभ्यमानत्वाद् (१), घटादिवदित्यनुमानेनानित्यत्वम् । न च स एवायं गकार इति प्रत्यक्षरूपप्रत्यभिज्ञाबलेनाभिव्यङ्ग्यत्वकल्पनमिति वाच्यम् । उत्पन्नो गकारो विनष्टो गकार इति प्रतीत्या प्रत्यभिज्ञाया एव जातिविषयत्वस्य कल्पनात् । अत एव कदाचित्तज्जातीयोयमिति प्रत्यभिज्ञोपपद्यते । अन्यथैकव्यक्तिकत्वेन(२) तज्जातेरभावात्तादृशप्रत्यभिज्ञानुपपत्तिः । स्वरूपेण जात्युपस्थितौ सोयमिति प्रत्यभिज्ञा जातित्वेन जात्युपस्थितौ तज्जातीयोऽयमिति प्रत्यभिज्ञेति विशेषः । किं च जात्यतिरिक्तस्यैकस्य मूर्त्तस्य युगपन्नानादेशोपलम्भो नास्तीत्यनुभवः । एवं च वर्णानां युगपन्नानादेशोपलम्भाद्भेदसिद्धिः । तस्मात्प्रत्यभिज्ञाबाधेनानित्यत्वसिद्धिरिति चेद्—

( १ ) 'तदुदितः सहि यो यदनन्तर' इति नयेन प्रयत्नजन्यत्वं वर्णानामितिभावः ।

( २ ) व्यक्त्यैक्यस्य जातिबाधकत्वादितिभावः ।

वृत्तिः ।

ज्ञाया युगपदुत्पत्तेः न ह्यनेकेषां युगपद् भ्रान्तिकल्पनं युक्तम् यद्वा सर्वव्यक्तिषु बोधस्य यौगपद्यात् नित्यः गोशब्देऽप्युच्चारिते युगपत्सर्वासां गोव्यक्तीनां प्रतीतिर्भवतीति आकृतिवचनत्व शब्दस्याध्यवसीयते न चाकृत्याऽनित्यशब्दस्य शक्तिग्रहः सम्भवति नित्यत्वे तु पूर्वपूर्वप्रयोगात्स शक्यग्रहः ॥ १९ ॥ दशकृत्वो गोशब्द उच्चारित इत्येव व्यवहारो भवति न तु दशगोशब्दा उच्चारिता इति अतः **संख्याभावात्** शब्दे द्वित्वादिसंख्याव्यवहाराभावात् शब्दस्यैकतया नित्यत्वम् ॥ २० ॥ **अनपेक्षत्वात्** अपेक्षा शब्दपगमहेतोरीक्षादर्शनं तद्रहितत्वात् लोके घटादेरिदं नाशकमित्यनुभूयते तथाशब्दनाशकमिदमिति न किंचिदपि केनचिदनुभूयतेऽतो नित्यः शब्दः । यद्वा यथा घटादिकार्यं स्वोत्पत्तौ समवाय्यसमवायिनिमित्तकारणमपेक्षते न तथा शब्दः तस्य समवायिकारणाभावात् तस्मान्नित्यः ॥ २१ ॥ **योग्यस्य** श्रोत्रजसाक्षात्कारयोग्यस्य **प्रख्याभावात्** प्रख्यायाः साक्षात्कारस्य सद्भावात् नित्यः शब्दः न तु वायुसंयोगजन्यतया वायुविकारः तथासति वायोरिवास्यापि श्रोत्रेण साक्षात्कारो न स्यात् ॥ २२ ॥ 'वाचा विरूप नित्यया' इति वाचो नित्यत्वे लिङ्गं दृश्यते तस्मादपि नित्यः शब्दः ॥ २३ ॥

सिद्धान्तः ।

न, अनभिव्यङ्ग्यत्वस्यासिद्धतया हेतोरसिद्धेः । प्रयत्नाभिव्यङ्ग्यत्वस्यैवाङ्गीकारात् ।

न च श्रोत्रनिष्ठग्रहणयोग्यताजनकसंस्कारोत्पादकत्वेन तन्निष्ठग्रहणप्रतिबन्धकदोषनिराकरणेन चाभिव्यञ्जकत्वे श्रोत्रस्याकाशाहङ्कारादिगन्धतमरूपस्य(१) नित्यव्यापकशब्दस्य वा संस्कृतत्वात्सर्वग्रहणापत्तिरिति वाच्यम् । अवच्छेदककर्णशष्कुल्यामेव संस्कारोत्पत्त्यङ्गीकारात् । उत्पत्त्यादिप्रतीतेरभिव्यञ्जकध्वनिस्वरादिविषयत्वेन प्रत्यभिज्ञाया जातिविषयकत्वायोगाच्च ।

न चानेकोत्पादादिप्रत्ययानां विषयभेदकल्पनमपेक्ष्यैकस्याः प्रत्यभिज्ञाया एव विषयभेदकल्पनमुचितमिति वाच्यम् । उत्पादविनाशप्रत्ययवद्भेदाभेदप्रत्ययस्यापि नानात्वात् । भेदस्यान्योन्याभावव्यावर्तकधर्मादिरूपतया नानात्वेन तदभावप्रत्ययस्यापि नानात्वात् । ध्वनीनां भेदस्योभयसिद्धत्वेन गकारादिव्यक्तिकल्पनाधिक्याच्च ॥

केचित्तूत्पादविनाशप्रत्यययोर्भ्रान्तित्वकल्पने व्यञ्जकध्वनिनिष्ठयोस्तयोः परम्परासम्बन्धेन(२) वर्णनिष्ठत्वेन भानमभ्युपेयम् । तथा च परम्पराघटकवायोरपि विषयतापत्त्या गौरवम् । प्रत्यभिज्ञाया गत्वगकारभेदविषयिण्या जातिविषयत्वकल्पनेऽपि नातिरिक्तविषयताकल्पनमिति लाघवमाहुः ।

तदपि गकारादिव्यक्तितत्प्रागभावध्वंसकल्पनागौरवेण निरस्तम् ॥

चिन्तामणिस्तु तारत्वमन्द्रत्वविरुद्धधर्माध्यासेन प्रत्यभिज्ञाया न प्रामाण्यं सम्भवतीति जातिविषयत्वं तस्याः । तथाहि । सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकतया तत्प्रतिबध्यतावच्छेदकतया वा गत्वादिव्याप्यनानातारत्वमन्द्रत्वादिजातिसिद्धौ पूर्वगकारापेक्षयोत्तरगकारो मन्द्र इत्यनुभवः पूर्वापरगकारयोरैक्ये न सम्भवति । अतोऽस्ति गकारयोर्भेदः । एवं गकारनिष्ठशुकपुरुषजन्यतावच्छेदकवैजात्यभेदेनापि तद्भेदः । अन्यथा तच्छ्रवणे शुकाद्यनुमितिर्न स्यात् । अतः प्रत्यभिज्ञाया एव जातिविषयकत्वकल्पनमित्याह ।

तदपि "मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम्" इत्यक्षरशिक्षायां मन्द्रत्वादिधर्मस्य स्वरनिष्ठत्वोक्तेरकिञ्चित्करम् ॥

अन्ये तु वर्णोऽनित्यः स्वाधिकरणनिष्ठाधेयतानिरूपकत्वसम्बन्धाव-

---

(१) श्रौत्रस्याकाशत्वमिति तार्किकाः, आहङ्कारिकत्वमिति सांख्याः, दिक्त्वमिति मीमांसकाः, इति विवेकः ।

(२) स्वाश्रयाभिव्यङ्ग्यत्वसम्बन्धेन । ध्वनेरपिनित्यत्वे वायुसंयोगघटितापरम्परा ग्राह्या तदाशयेनाह—वायोरपीति ।

च्छिन्नव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकाभावप्रतियोगिगुण- त्वात् । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकगगनपरिमाणाभावप्रति- योगिनि व्यभिचारवारणायाधेयतानिरूपकत्वसम्बन्धावच्छिन्नेति । उभ याभावप्रतियोगिनि तत्रैव व्यभिचारवारणाय व्यासज्येति । ईश्वरज्ञा- नस्य नाव्याप्यवृत्तित्वम् । संयोगाभावस्य न गुणत्वमिति । संयोगदृष्टा- न्तेनानित्यत्वमाहुः ।

तदपि गुणत्वाभावेन हेत्वासिद्ध्या प्रत्युक्तम् । वर्णात्मकशब्दस्याका- शवद्व्यापकत्वेन द्रव्यत्वाङ्गीकारात् । सामान्यवत्त्वे सति मनोभिन्नेन्द्रि- यजन्यलौकिकप्रत्यक्षविषयत्वादिति हेतुस्त्वाकाशकालदिशां षडिन्द्रि- यजन्यप्रत्यक्षविषयत्वेनानैकान्तिकः । इष्यते हि विशेषगुणसम्बन्धित्वे- नात्मन इव बाह्यविषयसम्बन्धित्वेन कालादिप्रत्यक्षम् । इदानीं घटो ज्ञातो घटाकाशे ध्वनिरुत्पन्न इत्याद्यनुभवात् । अतो नानित्यत्वम् ॥

यत्तु वर्णानां नित्यत्वे युगपन्नानादेशोपलम्भो न स्यादित्युक्तम् , तन्न आदित्योपलम्भवत्तदुपपत्तेः । एकस्यैवादित्यस्य दूरस्थतया सर्वैः स्वसांमुख्येन ग्रहणम् । एवं व्यापकवर्णानामपि तत्तद्ध्वनिभिस्त- द्देशाभिव्यक्तानां स्वसामीप्योन्मुखादिक्रमेण च ग्रहणमुपपन्नम् । तस्मा न्नित्यः शब्दः । अनुमानं च नित्य । शब्दः, ध्वनिभिन्नत्वे सति श्रावण- त्वात् , शब्दत्ववत् । अनेनैवानुमानेन वर्णानां द्रव्यत्वसिद्धिः । न चैवं सैवेयं गुर्जरीति प्रत्यभिज्ञानाद् ध्वनीनामपि नित्यत्वं स्यादिति वाच्यम् । रथन्तरादिगीतीनां नित्यताङ्गीकारेणेष्टापत्तेः । वर्णाभिव्यञ्जकध्वनीना- मेवानित्यत्वाङ्गीकारात् । गुर्जर्यादीनां तु वर्णाभावेपि प्रतीयमानानां रथ- न्तरादिवन्न गीतिरूपता । अतस्तेषामपि न बाधकम् । दर्शनस्य, उत्प- त्यादिदर्शनस्य, परार्थत्वाद् , ध्वनिविषयत्वादित्यर्थः ।

## वेदप्रत्यायकत्वाधिकरणम् ॥ ८ ॥

## उत्पत्तौ वा वचनाः स्युरर्थस्यातन्निमित्तत्वात् ॥२४॥

---

### वृत्तिः ।

ननु शब्दस्य नित्यत्वे सिद्धेऽपि वाक्यार्थे चोदनायाः प्रामाण्यं न सम्भवतीत्याक्षिपति— उत्पद्यतेऽवगम्यते इत्युत्पत्तिः वाक्यार्थः तत्र विषये चोदना **अवचनाः** अप्रमाण- भूताः स्युः **अर्थस्य** धर्मावबोधलक्षणकार्यस्य **अतन्निमित्तत्वात्** चोदनाहेतुकत्वा- भावात् चोदनावाक्यस्य धर्मावबोधे असामर्थ्यादिति यावत् । तथा हि किं पदानि प्रत्येकं वाक्यार्थं बोधयन्ति उत समुदितानि पदार्था वा नाद्यः इतरवैयर्थ्यापातात् पदानां वा-

**तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात् ॥२६॥**

नन्वस्तु पदपदार्थयोस्तत्सम्बन्धस्य च नित्यत्वम्। तथापि वाक्यस्य वाक्यार्थप्रतिपादकत्वासम्भवान्न प्रामाण्यं सम्भवति। तथाहि—न तावद् घटादिपदानां प्रत्येकं घटादिकर्मकत्वरूपवाक्यार्थप्रतिपादकत्वं सम्भवति। अनन्तवाक्यार्थसाधारणपदानां वाक्यार्थविशेषसम्बन्धसम्भवात्। एतेन पदसंघातरूपवाक्यस्य प्रत्यायकत्वमपास्तम्। तर्हि वाक्यस्य वाक्यार्थप्रतिपादकत्वासम्भवान्न प्रामाण्यं सम्भवतीति चेद्,

अत्र वैयाकरणाः—कृष्णैहि रक्षैनमित्यादौ वाक्ये पदरूपावयवविभागे मानाभावादेकारघटितानुपूर्वीकस्याऽऽगमनवाचकस्यात्र सत्त्वे मानाभावाच्च न पदसमुदायस्य वाक्यत्वं, किं त्ववयविरूपं तस्यैव विशिष्टार्थेशक्तिः, स एव वाक्यस्फोटः। एवं च एकं वाक्यं सूक्ष्मं वाक्यं महद्वाक्यमित्याद्यबाधितसंख्यापरिमाणा प्रतीतिरुपपद्यते। अन्यथा पदसमुदायस्य वाक्यत्वे समुदायस्य समुदाय्यपेक्षया भेदाभावात्तत्प्रतीत्य

---

वृत्तिः।

क्यार्थविशेषे संकेतग्रहाभावाच्च संकेतमनपेक्ष्य बोधकत्वे तु व्युत्पत्तिवैयर्थ्यप्रसङ्ग. बालानामपि बोधापत्तिश्च यद्वा पदपदार्थसम्बन्धस्य उत्पत्तौ वा औत्पत्तिकत्वे स्वाभाविकत्वेऽपि चोदनाः **अवचना** अप्रमाणानि **अर्थस्य** वाक्यार्थावबोधस्य **अतन्निमित्तत्वात्** पदपदार्थसम्बन्धातिरिक्तवाक्यवाक्यार्थसम्बन्धनिमित्तकत्वात् तादृशसम्बन्धस्य शक्तिरूपत्वे तात्पर्यरूपत्वे वा पुरुषसम्बन्धापेक्षाया दुर्निवारत्वात् ॥ २४ ॥

**तद्भूतानां** तेषु पदार्थे भूतानां वर्तमानानां पदानां **क्रियार्थेन** क्रियावाचकेन पदेन सह **समाम्नायः** परस्परान्वितस्वार्थबोधकत्वेन उच्चारणं भवति **अर्थस्य** वक्यार्थप्रतिपत्तेः **तन्निमित्तत्वात्** पदार्थप्रतिपत्तिनिमित्तत्वात तथाच वाक्यानां वाक्यार्थे शक्तिज्ञान नापेक्ष्यते किंतु पदैरभिहिताः पदार्था एव वाक्यार्थं बोधयन्ति न तु पदानां वाक्यस्य वा तत्र व्यापारः पदार्थबोधेनैव कृतार्थत्वात् तात्पर्यं च न पुरुषेच्छाघटितमिति तत्तत्पदसमभिव्याहृतपदरूपं वाक्यं पदार्थज्ञानसहकारेण तत्तत्पदार्थान्वितभावनारूपं वाक्यार्थं बोधयति एवं च वाक्यार्थबोधस्य पदार्थमूलकत्वेन निर्मूलकत्वाभावात पुरुषापेक्षाभावाच्च निष्प्रत्यूहं वाक्यार्थे चोदनानां प्रामाण्यमिति ॥ २५ ॥

**लोके सन्नियमात्** सति गृहीतशक्तिकपदे समवहिते सति अगृहीतशक्तिकादपि पिकादिपदात् 'इह सहकारतरौ मधुरं पिको रौती'त्यादितो नियमात् बोधदर्शनात् वेदेपि **प्रयोगसन्निकर्षः** अप्रसिद्धस्वर्गहेतुभावनावाचिपदघटितस्य 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यस्यापि अर्थावबोधसम्बन्धः स्यात् ॥ २६ ॥

नुपपत्तिः । अतो वाक्ये शक्तिः : एवं घटेनेत्यादिपदैः प्रकृतिप्रत्ययविभागे तदंशे च शक्तिकल्पने मानाभावादवयविरूपपदस्यैव शक्तिरूपः स्फोटः । एवं भवतिपचतीत्यादौ भूधातुलडाद्युपस्थितौ मानाभावादानुपूर्वीविशिष्टवर्णानां शक्तिरिति वर्णस्फोट इत्याहुः ।

तन्मन्दम्—विस्मृतपूर्ववर्णस्यान्तिमवर्णस्मृतिमतः पदार्थप्रत्ययाभाववत्पदार्थस्मृतिमतो विस्मृतपूर्वपदस्य वाक्यार्थप्रत्ययाभावापत्तेस्तत्तत्पदार्थस्मृतिवशेन पदानुमानविलम्बे मानाभावाच्च । किं चैवं पदार्थवद्वाक्यार्थोऽपि निर्भागः स्यात् , तदा—

(१)प्रसङ्गो बाधतन्त्रोहातिदेशाधिक्रियागमाः ।
प्रयुक्तिशेषभेदाश्च न कल्पेरन्निति स्थितिः ॥ इति ।

वाक्यस्य निरवयवत्वं तु पठ्यमानश्लोकार्थानवबोधे सति तदवयवपदार्थप्रदर्शनेन जायमानेन श्लोकार्थानुभवेन विरुद्धत्वात् प्रत्युक्तम् । पूर्वमज्ञातायाः वाक्यशक्तेर्वाक्यार्थानुभवजनकत्वायोगात्पूर्वज्ञानकल्पने स्मारकत्वापत्तिः । वाक्यशक्तिज्ञानं तद्धेतुकवाक्यार्थानुभवश्चैकदा विरुद्धौ । एवं पदानामपि निरवयवत्वं प्रत्युक्तम् । धातुप्रत्ययविभागानभिज्ञस्य बाधापत्तेः । एवं वर्णस्फोटोऽपि स्फोटवर्णेषु शक्तिकल्पनगौरवमपेक्ष्य धातुप्रत्ययोपस्थापकत्वकल्पनालाघवेन निरसनीयः, धातुप्रत्ययानभिज्ञस्य यङन्तपदैः पदार्थानुपस्थितेश्च । एकत्वमहत्वप्रतीतिस्तु 'एकोमहान्धान्यराशिः' इतिवदौपाधिकी । अतो न वाक्यस्फोटरूपा वाक्यशक्तिरिति ॥

केचित्तु पदानामितरपदार्थान्वित शक्तिः इतरपदार्थश्च तत्समभिव्याहारेण विशेषितोऽननुगत एव । एवञ्चाकाङ्क्षितयोग्यसन्निहितार्थाभिधायकानां पदानां वाक्यार्थप्रतीतिपादकत्वमित्याहुः ॥

गुरवस्तु कार्यान्वयस्य वाक्यार्थतया पदानामेव कार्यान्विते अनुभाविका शक्तिः । स्मारिका च जातिगुणादौ । अनुभावकशक्तिग्रहे च स्मारकशक्तिज्ञानस्य हेतुता, तेनोपपत्तेर्न वाक्यार्थे शक्तिः । तथाहि प्रयोज्यवृद्धप्रयोजकवृद्धव्यवहारेण शक्तिं गृह्णन् बालः, प्रयोज्यवृद्धप्रवृत्तेश्च मातृस्तन्यप्रवृत्तिदृष्टान्तेन कार्यताज्ञानजन्यत्वमनुमाय, तज्जनकापेक्षायां प्रयोजकवृद्धवाक्यानन्तर्यात्तस्यैव हेतुतां ज्ञात्वा, तत्रत्यपदानां कार्यान्विते शक्तिं जानाति, तत आवापोद्वापाभ्यां तत्तत्पदार्थे

(१) प्रसङ्ग इति । पाशुकानां प्रयाजादीनां पुरोडाशेषुप्रसङ्गः, त्रिषु चाग्नेयादिषु तन्त्रमङ्गानि, कृष्णलादीनां चावघातादिषु बाधः, अग्नये इत्यस्यस्थाने सूर्याय इत्यूहः इत्यादयोनिर्भागवाक्यार्थपक्षे नोपपन्ना भवेयुरित्यर्थः ।

शक्तिं जानन्नपि पूर्वावधृतां कार्यान्वितशक्तिं न बाधते। एवं च पदानां कार्यान्वितवाचकत्वादन्वयेपि शक्तिरित्याहुः ॥

एतन्मतद्वयमपि इतरान्विते कार्यान्विते वा तस्यापि शक्तिग्रहस्य गौरवप्रतिसन्धानदशायां चन्द्रतारकापरिमाणज्ञानवद्बाधसम्भवात्कार्यवाचकपदसमभिव्याहाराभावे शाब्दबोधानुदयप्रसङ्गाच्च न युक्तम्।

नैयायिकास्तु घटत्वप्रकारकघटविशेष्यकप्रत्यक्षादौ समवायादेरिव(१) घटकर्मप्रकारकानयनविशेष्यकशाब्दबोधेपि निष्ठत्वादेः संसर्गतया भानं सम्भवति। प्रकारविशेष्ययोरेव शाब्दत(२) वात्संसर्गस्योभयसमभिव्याहारागम्यत्वात्संसर्गमर्यादालभ्य इत्याहुः ॥

सिद्धान्तस्तु घटमानयेत्यादौ घटपदोपस्थितघटसामान्यस्यानयनान्वयबोधासम्भवाद् घटानयनविशेष एव वाक्यार्थः, स च लाक्षणिकः, अतो लाक्षणिक एव वाक्यार्थः, तत्र च नामसु कारकविशेष्यता सर्वत्र च भावनाविशेष्यतेति नियमः स्मृतिगम्यः(३)। एतेनाख्यातसमभिव्याहारे प्रथमान्तार्थविशेष्यकबोधनियमं वदन्तस्तादृशनियमे मानाभावेन परास्ताः। नहि प्रथमान्तपदार्थस्य प्राधान्यबोधकं स्मृत्यादि मानमस्ति। वाक्यार्थसंसर्गस्योभयविधत्वेन विनिगमनायोगात्। तथा च लाक्षणिकवाक्यार्थे पदसमुदायरूपवाक्यस्य पदजन्यपदार्थोपस्थितिद्वारा जनकत्वमिति वाक्यस्य वाक्यार्थबोधे प्रमाण्यमिति युक्तं विधीनां धर्मे प्रामाण्यम् ॥

## वेदपौरुषेयत्वाधिकरणम् ॥ ८ ॥

**वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥** अनित्यद-

(१) तर्हि स्वसंयुक्तविशेषणतासन्निकर्षेण समवायस्य प्रत्यक्षत्वमङ्गीक्रियेत।

(२) शाब्दत्वाच्छब्दाजन्योपस्थितिविषयत्वादित्यर्थः। आकाङ्क्षालभ्यस्यापि संसर्गस्य शाब्दबोधविषयत्वाभ्युपगमेन यथाश्रुतं तु न युक्तम्। संसर्गमर्यादाआकाङ्क्षा तत्पदत्वरूपा।

(३) स्मृतिगम्य इति। 'भावप्रधानमाख्यानं सत्त्वप्रधानानि पामानि' इति यास्कस्मृतिगम्यइत्यर्थः।

वृत्तिः।

एके अन्ये तार्किकाः वेदान् सन्निकर्षं सन्निकृष्टकालीनान् वदन्ति यतस्ते वेदाः पुरुषाख्याः पैप्पलादं कालापकं काठकमित्याधुनिकपुरुषेण सामाख्यायमानाभवन्ति॥२७॥

**र्शनाच्च ॥ २८ ॥ उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥ आख्याः प्रवचनात् ॥ ३० ॥ परन्तु श्रुतिसामान्यमात्रम् ॥ ३१ ॥ कृते वा विनियोगः स्यात्कर्मणः सम्बन्धात् ॥ ३२ ॥**

नन्वस्तु पदानां पदपदार्थसम्बन्धस्य च नित्यत्वं, वाक्यार्थप्रमितेश्च वाक्यजन्यतया विधीनां प्रामाण्यं, तथाप्यानुपूर्वीरूपवेदानां नित्यत्वासम्भवात्काठकादिसमाख्यया तत्कर्तृकत्वनिश्चयाच्च पौरुषेयत्वं सम्भवति। पुरुषे च दोषसम्बन्धसम्भावनया न प्रामाण्यं सम्भवति। तथाहि। वेदः प्रागभावप्रतियोगितावच्छेदकधर्मवान् वाक्यत्वात्, भारतवदित्यनुमानेन पौरुषेयत्वम्। न च सामान्यधर्मस्य प्रागभावप्रति-

---

वृत्तिः।

**अनित्यदर्शनात्** 'बबरः प्रावाहणिरकामयत' इति भूतार्थकथनेन तस्मिन्समये वेदो नासीदित्यर्थस्यावगमात् **च** अपि पौरुषेया वेदा **इति पूर्वपक्षः** ॥२८॥

**अथ सिद्धान्तः शब्दः** शब्दनं पूर्वपूर्वाध्ययनम् **तत्पूर्वकत्व** मुत्तरोत्तराध्ययनस्य अध्येतृभिरुक्तं **तु**। अयं भावः विवादाध्यासितं वेदाध्ययनं अध्ययनपूर्वकम् अध्ययनत्वात् इदानींतनाध्ययनवत् इत्यनुमानान्नैव वेदस्य प्रथमः कश्चिदध्येतास्ति येन सुकर्तृकत्वं स्यादिति ॥ २९ **आख्या** पैप्पलादं कालापमित्यादिसमाख्या **प्रवचनात्** प्रवचनातिशयादुपपद्यते। अयमभिप्रायः पैप्पलादशाखा पिप्पलादेनयथा सम्यगभ्यस्ता न तथाऽन्येनेति कृत्वा पैप्पलादशाखा इति व्यपदिश्यत न तु पिप्पलाद कृतत्वादिति ॥३०॥ **परम्** अन्यत् अप्रामाण्यसाधकम् 'अनित्यदर्शनम्' इति यदुक्तं तत् **श्रुतिसामान्यमात्रम् तु** नार्थो अतो न दोष इत्यर्थः। तथा च प्रतियुगमनुवर्तमाना बबरादयः प्रवाहनित्यतया चन्द्रसूर्यादिवत् वैदिकपदशक्याः सन्तो वेदस्य नित्यतां व्याघ्नन्ति इति भावः ॥३१॥ नन्वेवमपि 'गावो वा सत्रमासत' 'सर्पाः सत्रमासत' इत्यादिवेदवाक्यानां प्रमत्तगीतसदृशानां कथं प्रामाण्यमत आह-**कृते इति**। **कृते** कर्मणि प्रशंसाद्वारा गाव इत्यादीनां **विनियोगः** अन्वयः **स्यात्** अतो धर्मप्रामाण्यमस्ति वा एव **कर्मणः** स्वत्रादिकर्मणः प्रशंसापेक्षाविषये 'वायव्यं श्वेतमालभेत भूति कामः, वायुर्वैक्षेपिष्ठादेवता वायुमेव स्वेन भागधेयेनोपधावति, सएवैनं भूतिं गमयति' इत्यादिविहितकर्मभिः **समत्वात्** तुल्यत्वादित्यर्थः। एवं च वेदोऽपौरुषेय इति सिद्धम् तथाच 'ब्रह्म स्वयंभु' 'वाचा विरूपनित्यया' अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा' स्वयंभूरेषभगवान्वेदोगीत स्त्वयापुरा। शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः' इत्याद्याः श्रुतिस्मृतय इति सिद्धम्।

इति न्यायव्याकरचार्य मीमांसकशिरोमणि सूर्यनारायणशुक्लविरचितायां जैमिनिसूत्रप्रभायां ( वृत्तौ ) प्रथमाध्याये प्रथमः पादः पूर्णतामभजत्।

योगितानवच्छेदकत्वेन(१) वेदत्वस्यातथात्वादसिद्धिरिति वाच्यम् । वेदत्वस्याताहशत्वेपि इदानीन्तनवेदत्वादीनां तदवच्छेदकतया नासिद्धिः अन्यथा घटादीनामपौरुषयेत्वप्रसङ्गः ।

वस्तुतो वेदत्वं प्रागभावप्रतियोगितावच्छेदकं कार्यवृत्तिधर्मत्वात् । तद्घटत्ववदित्यनुमानेन वेदत्वस्यापि तथात्वात् । अतो वेदानां पौरुषेयत्वम् । एवं च काठककालापकादिसमाख्या बवरः प्रावाहणिरकामयतेत्याद्यनित्यसंयोगोप्युपपद्यते । तदुक्तं, सन्निकृष्टकाला वेदा इदानीन्तना इति । तत्र चास्मदादीनां कर्तृत्वासम्भवाद्व्यासादिवदीश्वर एव एवं कर्ता च श्रयो "वेदा अजायन्तेत्यग्नेर्ऋग्वेदो वायोर्यजुर्वेद" इत्यादि दर्शनमुप पद्यते अतो न स्वतः प्रामाण्यमिति चेत्, न ।

उक्तानुमानस्य वेदत्वं न प्रागभावप्रतियोगिताच्छेदकं सामान्यधर्मत्वादित्यनुमानेन सत्प्रतिपक्षितत्वात् । प्रतियोगितावच्छेदकभेदाभावेन सकलघटप्रागभावैक्ये प्रतियोग्युत्पत्तिनाशत्वासम्भवेन च नित्यत्वापत्तेः । इष्टापत्तौ तूत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः, प्रागभावनाशस्वीकारे घटानुत्पत्तिप्रसङ्गः । अवयं वशस्तन्नाशस्वीकारो निरवयवत्वादेवायुक्तः । प्रतियोगिभेदेनाभावनानात्वकल्पने संसर्गाभावान्योन्याभावयोरैक्यप्रसङ्गः । अतो न सामान्यधर्मस्य प्रागभावप्रतियोगिताच्छेदकत्वम् ।

प्रथमानुमानमपि वेदाः प्रागभावप्रतियोगितावच्छेदकधर्माभाववन्तो, ऽस्मर्यमाणकर्तृकत्वाद्, आत्मवदित्यन्वयिना। अस्मर्यमाणकर्तृकवाक्यत्वादिति व्यतिरेकिणा च सत्प्रतिपक्षितम् । वेदशून्यकालाभावेन वेदप्रागभावासिद्धश्च । तथाहि । पूर्वकालो न वेदशून्यः कालत्वाद्, वर्त्तमानकालवत् । पूर्वकालीनं वेदाध्ययनं गुर्वध्ययनपूर्वकं, वेदाध्ययनत्वाद्, इदानीन्तनवेदाध्ययनवत् । वेदा न पौरुषेयाः अस्मर्यमाणकर्तृकत्वादित्यनुमानेनापौरुषेयत्वसिद्धेश्च ।

---

(१) प्रतियोगितानवच्छेदकत्वेनेति । घटो नास्तीत्यादौ प्रतिबन्ध्यप्रतिबन्धकभावानुरोधेन घटत्वादेः सामान्य धर्मस्य प्रतियोगितावच्छेदकत्वं कल्प्यते न तु घटप्रागभावादौ । तथाहि घटवति भूतले घटो नास्तीति प्रतीतिर्न भवति तद्घटो नास्तीति प्रतीतिश्च भवति इति प्रतीत्योर्वैलक्षण्योपपत्तये एकस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वपरस्य विशेषधर्मावच्छिन्न प्रतियोगिताकत्वे चाङ्गी क्रियते । एकघटवत्यपि भूतले घटान्तरप्रागभावप्रतीतिर्भवतीति तस्य तद्घटोनास्तीति प्रतीतिवद्वद्विशेषधर्मावच्छिन्नप्रतियोगिताकत्वमेवाङ्गीक्रियते इति भावः ।

नन्वस्मर्यमाणकर्तृककूपादौ व्यभिचारः, तत्रापि सामान्यतः कर्तृस्मरणात् । अतः पौरुषेयत्वासम्भवादपौरुषेयत्वम् । एव "वाचा विरूप नित्यये"ति श्रुतिः—

स्वयंभूरेष भगवान् वेदो गीतस्त्वया पुरा ।
शिवाद्या ऋषिपर्यन्ताः स्मर्त्तारोऽस्य न कारकाः ॥

इति स्मृतिश्चोपपद्यते । काठकादिसमाख्या तु श्रुतिस्मृतिविरोधात्प्रवचननिमित्तत्वेनोपपादनीया । अग्नेर्ऋग्वेद इत्यादिश्रुतिरपि अग्निना ज्ञापितइति व्याख्येया । (१)अनित्यसंयोगोऽपि प्रवाहनित्यतामादायोपपादनीयः । प्रवाहनित्यत्वं च (२)सजातीयप्रागभावसमयव्याप्तसजातीयध्वंसकत्वरूपम् । यद्वा बहुक्षीरादिवाक्यवदसत्यकथादिना विधेयस्तुतिपरत्वेनोपपादनीया । अतोऽपौरुषेया वेदा इति सिद्धं वेदप्रामाण्यम् ॥

विश्वामित्रकुलध्वजः समभवद्यो भट्टनारायण
स्तद्वंशस्य करीरतां दधदयं विश्वेश्वराख्यः कृती ।
गागाभट्ट इति प्रथां दिनकरात्प्राप्तः पितुर्लालनात्
तद्ग्रन्थे प्रथमादिमोऽङ्घ्रिरगमच्छ्रीभाट्टचिन्तामणौ ॥ १ ॥
अहो बहु परीक्षितुं निकषणीयमेतन्निजे
न मत्सरकदुष्णिते कषशिलानिभे चेतसि ।
परं तु हृदयालुभिः खलुः दयालुभिः स्थाप्यतां
महाद्भुतरसाम्बुधौ निजकृपानिधौ मद्वचः ॥ २ ॥

इति भट्टकुलावतंसमीमांसकमहामहोपाध्यायश्रीगागाभट्टकृतभाट्टचिन्तामणौ प्रथमाध्यायस्य प्रथमः पादः ॥

॥ संपूर्णोयं भाट्टचिन्तामणेस्तर्कचरणः ॥

---

( १ ) बर्वरः प्रावाहणेयिरकामयत इत्यादिरूपः अनित्यसंयोगः प्रवाहनित्यतया संसारस्यानादितयोपपादनीयइत्यर्थः ।

( २ ) सजातीयेति । सजातीयस्य कस्यचिद्वस्तुनो ध्वंसः कस्यचित्प्रागभावः यस्मिन्समये इत्यर्थः ।

इति भाट्टचिन्तामणिमयूखे तर्कपादः ।

विश्वेश्वरः शरणम् ।

# भाट्टचिन्तामणिमयूखः ।

पृ० १ पं० १ अधितदुद्यानम्—अधिसाकेतोद्यानमित्यर्थः ।

पृ० १ पं० ९ मुरविद्विष इति । मुरारेरित्यर्थः । मुरारिमतं मुक्तावल्यां 'प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः' इति कारिकाव्याख्यावसरे प्रामाण्यवादगादाधर्यो च निरूपितम् । गुरोः प्रभाकरस्य कुमारिलभट्टपश्चाद्भावित्वेऽपि वृत्तानुरोधेन प्रथमं निर्देशः । इत्थं च मीमांसकानां प्रस्थानत्रयं कुमारिलप्रस्थानं प्रभाकरप्रस्थानं मुरारिप्रस्थानं चेति । एतदनुरोधेनैव 'मुरारेस्तृतीयः पन्थाः' इति प्रसिद्धिः ।

पृ० १ पं० १८ सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ इति कुमारिलभट्टपादोक्तिमनुसृत्य प्रयोजनादीनाह—तेनेति । तथा च अस्य शास्त्रस्य धर्मज्ञानं प्रयोजनं, धर्मो विषयः, शास्त्रविषययोः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, अधीतवेदोऽधिकारी इति बोध्यम् । एत एवानुबन्धचतुष्टयशब्देन व्यपदिश्यन्ते । अनुबन्धत्वं च प्रवृत्तिप्रयोजकज्ञानविषयत्वम् । प्रवृत्तिप्रयोजकं च ज्ञानमिष्टसाधनताज्ञानम् । पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥ इति मण्डनमिश्रोक्तेः । तत्र इष्टत्वावच्छिन्ना प्रयोजननिष्ठा इष्टत्वावच्छिन्ना विषयनिष्ठा साधनत्वत्वावच्छिन्ना साध्यसाधनभावरूपसम्बन्धनिष्ठा अहन्त्वावच्छिन्नाधिकारिनिष्ठा विषयतेति चतुर्ष्वपि समन्वयः ।

पृ० १ पं० २० वेदाध्ययनेति । अयं भावः 'धर्मेण पापमपनुदति' इति वाक्येभ्यः सामान्यतो धर्मे ज्ञाते धर्मविशेषविषयिणी जिज्ञासा जायते विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वात् । तद्विषयकेति । कृतिं प्रतीच्छायाः इच्छां प्रति च ज्ञानस्य कारणत्वादित्यर्थः ।

पृ० २ पं० ३ स्वं सूत्रं तेन सूचितो यो न्यायः वेदाध्ययनस्य अदृष्टार्थत्वरूपः तेनानुपाद्यं यत्प्रमाणं 'स्वाध्यायोऽध्येतव्यः' इति अध्ययनविधिरूपं तत्सापेक्षमिदं सूत्रमित्यर्थः । तेनापि—अध्ययनविधिनापि ।

पृ० २ पं० १२ स्तोभाध्ययन इति । अर्थाभिधानौपयिकेभ्यः ऋगक्षरेभ्योऽधिकं विवर्णं च स्तोभ इति व्यपदिश्यते 'अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात्' ( ९ अ० २ पा० ३९ सू० ) इति जैमिनिसूत्रात् ।

पृ० ४ पं० ३ अङ्गसम्पादनासमर्थस्येति । तथा च शास्त्रदीपिका—

सत्यमध्ययनं नाङ्गं तत्कृता त्वङ्गमर्थधीः ।
तद्द्वतः क्रतवो लब्ध्वा न तुर्यस्याश्रिपन्ति ताम् ॥ इति ।

पृ० ४ पं० २७ क्वचित्पाठ इति । एतन्मते ऽधिकरणस्य षडङ्गत्वं बोध्यम् ।

पृ० ५ पं० ३ स्मृतिस्त्विति । अधीत्य स्नायादिति स्मृतिस्त्वित्यर्थः ।

पृ० ५ पं० १२ अथशब्दो मङ्गलार्थक इति । अथ शब्दस्य मङ्गलार्थकत्वं च 'निरस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे । यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयां बभूव ताम् ॥ इति श्रीहर्षपद्यस्थितस्य अथ स्नपयांबभूवेत्यस्य मङ्गलस्नानेन स्नपयाञ्चकारेति व्याख्यानेनावगम्यते ।

पृ० ७ पं १४ आचारानुमेय इति । मङ्गलं वेदबोधितकर्तव्यताकम् अलौकिकाविगीतशिष्टाचारविषयत्वात् दर्शादिवत् इति अनुमानस्वरूपम् । भोजनादौ व्यभिचारवारणाया लौकिकेति । रात्रिश्राद्धादौ व्यभिचारवारणाय अविगीतेति । शिष्टपदं स्पष्टार्थं न कुर्यान्निष्फलं कर्म इति वचनेन जलताडनादेर्निषिद्धत्वेनाविगीतपदेनैव व्यभिचारवारणात् । न च विधिनिषेधयोर्मनुष्याधिकारीयत्वात पश्वादिकृतवृथाचेष्टायामलौकिकत्वाविगीतत्वयोः सत्त्वात्तत्र व्यभिचारवारणाय शिष्टपदमावश्यकमिति वाच्यम् , बलवदनिष्टाननुबन्धित्वरूपाविगीतत्वस्य इष्टोत्पत्तिनान्तरीयकदुःखातिरिक्तदुःखाजनकत्वपर्यवसन्नस्य विवक्षणेन वृथाचेष्टास्थले इष्टोत्पत्त्यभावेन कष्टं कर्मेति न्यायेन तज्जनितश्रमस्य इष्टोत्पत्त्यनान्तरीयकदुःखजनकतया पश्वादिवृथाचेष्टायामपि अविगीतत्वाभावेन व्यभिचारासंभवादिति ध्येयम् ।

पृ० ५ पं १६ विघ्नसमसंख्याकेति । नन्विदमयुक्तम् यत्र विघ्नापेक्षया मङ्गलानामाधिक्यं वर्तते तत्र विघ्नसमसंख्याकमङ्गलाभावाद् समाप्त्यभावापत्तेरिति चेदत्रोच्यते शते पञ्चाशन्न्यायेन तत्रापि विघ्नसमसंख्याकत्वोपपत्तेः । ननु स्थलान्तरीयविघ्नसंख्यामादाय न्यूनसंख्याकमङ्गलादपि समाप्तिः स्यादिति चेन्न तत्तत्स्थलीयविघ्नेतरावृत्तिः तत्तत्स्थलीयसकलविघ्नवृत्तिर्या संख्या तत्सजातीया तत्तत्स्थलीयमङ्गलेतरावृत्तिताहशसकलमङ्गलवृत्तिर्या संख्या ताहशसंख्यावन्मङ्गलत्वेन कारणत्वाङ्गीकारेणादोषात् ।

पृ० ५ पं० २८ ताहशनियमस्येति । इष्टसाधनत्वभाव्यत्वयोः समानप्रकारकत्वनियमस्य व्यभिचारः तुषाणामुपवापकर्मत्वेऽपि तुषाणां प्रतिपत्तिकर्मतया इष्टसाधनत्वाभावादित्यर्थः ।

पृ० ६ पं० ६ धर्मस्वरूपं तत्प्रमाणं चेति । यश्चोदनालक्षणः स धर्म इति योजनया श्रुत्या स्वरूपविधावर्थात्प्रमाणविधिः यो धर्मः स चोदनालक्षणः चोदनैव तस्य लक्षणं प्रमाणम् चोदना च तस्य लक्षणमेवेति श्रुत्या प्रमाणविधावर्थात्स्वरूपविधिरिति भावः ।

पृ० ६ पं० ८ संकरादिति । क्रियात्वाभाववत्यामिच्छायां यागत्वं यागत्वाभाववति गमने क्रियात्वं यागपदार्थक्रियायां यागत्वं क्रियात्वं चेति संकर इत्यर्थः । संकरश्च परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशरूप इति बोध्यम् ।

पृ० ६ पं ११ यागापूर्वोभयनिष्ठोपाधिरेवेति । यागापूर्वान्यतरस्वरूपो धर्मविशेष एवेत्यर्थः ।

पृ० ६ पं० १७ मुख्यवेदेति । तेन 'इतिहासपुराणानि पञ्चमो वेद उच्यते' इत्यनेन गौणवेदप्रयोगविषयत्वस्य इतिहासादिषु सत्त्वेऽपि नातिव्याप्तिः ।

पृ० ८ पं० १ प्रभाकरवचनमिति । यथा चाहुः 'यस्य हि विधिः स्वसिद्ध्यन्यथानुपपत्त्यानुष्ठानमाक्षिपति तद्विधेयमित्युच्यते काम्येषु च कर्मसु कामनाविधिवशादेव प्रवृत्तिसिद्धेस्तत एव विधिः सिद्ध्यन्नन्यथानुपपत्त्यभावान्न स्वयमनुष्ठानमाक्षिपति' इति ।

पृ० ९ पं० १५ अर्थवादानामिति । 'वायुर्वै क्षेपिष्ठा' इत्यादीनामर्थवादानां प्राशस्त्ये लक्षणया विधिवाक्यैः सहैकवाक्यतयाऽन्वयेन 'यागः प्रशस्तः' इति 'यागभावना प्रशस्ता' इति वा बोध इति भावः । प्रकारांशे प्राशस्त्यांशे । विशेष्यांशे — यागांशे ।

पृ० ९ पं० १९ मन्त्राणाम्—'अग्नये त्वा जुष्टं निर्वपामि' इत्यादीनाम् ।

पृ० ९ पं २८ पुरुषान्तरीयज्ञानविषयत्वमादायाव्याप्तिवारणाय स्वसमानाधिकरणेति । उत्तरक्षणवृत्तिज्ञानविषयत्वमादायाव्याप्तिवारणाय स्वाव्यवहितेति ।

पृ० ९ पं० ३० शब्दप्रकारकेति । देवदत्त इत्यादिपदात् 'देवदत्तपदवान्' इति बोधवदग्निहोत्रपदात् 'अग्निहोत्रपदवान्' इति बोध इति भावः ।

पृ० १० पं० ९ तद्वद्विशेष्यकत्वावच्छिन्नेति । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं प्रमात्वमित्यर्थः । नन्वेवं यत्र रङ्गरजतयोरिमे रजते इति ज्ञानं तत्रातिव्याप्तिरिति चेन्न तदभाववन्निष्ठविशेष्यताभिन्नविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वं प्रमात्वमित्यङ्गीकारेणादोषात् ।

पृ० १० पं० १७ न गौरवमिति । स्मृतिभिन्नत्वे सति ज्ञानत्वस्यानुभवत्वेन विशेष्यविशेषणभावव्यत्यासेन गौरवं स्यादिति भावः।यद्वा न गौरवमिति । स्मृत्यन्यज्ञानत्वरूपानुभवत्वस्य प्रमात्वघटकत्वे वैयर्थ्यं स्यादिति ज्ञानत्वघटितस्यैव प्रमात्वस्यौचित्यमिति भावः । वैयर्थ्यं च स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरघटितत्वम् । यथा वह्नौ साध्ये धूमत्वघटितत्वेन नीलधूमहेतौ वैयर्थ्यं तथा प्रकृते अनुभवत्वस्य ज्ञानत्वघटितत्वे स्यात् परं तु तदेव न अनुभवत्वस्य जातिरूपत्वाङ्गीकारादिति तत्त्वम् ।

पृ० १० पं० १८ लाघवादिति । तथा च ज्ञानत्वघटितमेव प्रमात्वं नत्वनुभवत्वघटितमनुभवत्वस्य जातित्वे मानाभावेन वैयर्थ्यात् एवं सति स्मृतेरपि प्रमात्वं स्यादिति चेदिष्टापत्तिरिति गृहाण ।

पृ० १० पं० २२ न चेति । तथा च अनुभवत्वं न स्मृतिजनकतावच्छेदकमिति भावः गौरवादिति । संशयभिन्नज्ञानत्वरूपनिश्चयत्वेन स्मृतिजनकत्वेन गौरवम् । ज्ञानत्वेन स्मृतिजनकत्वे आह बहुतरेति । अयं भावः विशेषरूपेण कारणत्वे व्यभिचाराज्ज्ञाने सामान्यरूपेण करणत्वे ऽन्यथासिद्धत्वम् अत एव दण्डस्य द्रव्यत्वेन न कारणतेति भावः ।

११—३ सुवर्णतृणे इति ज्ञाने अत्यन्ताभावस्याव्याप्यवृत्तितया अंशे उपेक्षात्वमंशे उपेक्षात्वात्यन्ताभावश्च एकस्मिन्ज्ञाने तिष्ठतः भेदस्तु व्याप्यवृत्तिः स तु न तिष्ठतीति उपेक्षान्यत्वमित्यस्य उपेक्षात्वात्यन्ताभाव इत्यर्थो वर्णित इति भावः ।

पृ० ११ पं० २३ शब्दान्तरात् ददाति जुहोतीत्यादौ, अभ्यासात् समिधो यजति इडो यजति इत्यादौ, संख्यायास्तिस्र आहुतीरित्यादौ, नाम्नः अथैष ज्योतिरित्यादौ, गुणात् वैश्वदेव्यामिक्षा वाजिनमित्यादौ, प्रकरणान्तराद्वारवन्तीयादौ कर्मभेद इत्यर्थः ।

पृ० १२ पं० ३ ननु दोषाभाव एव कारणमस्त्वत आह—दोषाभावस्येति । गौरवादिति । विनिगमनाविरहादनन्तदोषाभावस्य कारणत्वे गौरवम् । अनुत्पत्तिप्रसङ्गाच्चेति । तत्र पीतदोषसत्वाच्छङ्खत्वप्रमानुत्पत्तिप्रसङ्गादित्यर्थः । ननु गुणसत्त्वेऽपि पित्तेन प्रतिबन्धान्न श्वैत्यज्ञानमतः पित्तादिदोषाभावानां कारणत्वं वक्तव्यं तथा च किं गुणस्य हेतुत्वकल्पनयेत्यत आह—अन्वयव्यतिरेकाभ्यामिति । गुणसत्त्वे प्रमा गुणाभावे प्रमाभाव इत्यन्वयव्यतिरेकाविति भावः । गुणः—

प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ गुणः ॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा ।
गुणः स्यात्, भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा ॥

इति कारिकावल्यामुक्तः ।

दोषः—पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥ इति च तत्रैव ।

पृ० १२ प० १० तद्विषयविषयकत्वम्—अर्थक्रियाविषयविषयकत्वमित्यर्थः ।

पं० २३तस्यापि—अर्थक्रियाज्ञानस्यापि ।

पृ० १३ पं० २ गौरवादिति । यथा घटः इति सविकल्पकानन्तरं घटज्ञानवानहमिति ज्ञानं भवति तथा घटघटत्वे इति निर्विकल्पानन्तरमपि ज्ञानोत्पत्तिः स्यादिति निर्विकल्पकप्रत्यक्षवारणाय निष्प्रकारकत्वादिज्ञानं प्रतिबन्धकं वाच्यमिति विनिगमनाविरहेण गौरवमिति भावः ।

पृ० १३ पं० ९ उचितमिति । आत्मनिष्ठगुणप्रत्यक्षे तादात्म्येन ज्ञानं प्रतिबन्धकम् इति ज्ञानस्य प्रत्यक्षं न सम्भवति । उपनीतभानत्वं—ज्ञानलक्षणासन्निकर्षेण भानत्वमिति भावः ।

पृ० १३ पं० २९ लाघवेनेति । घटाकाशसंयोगप्रत्यक्षवारणाय संयोगप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुताङ्गीक्रियते, न तु व्यासज्यवृत्तिधर्मप्रत्यक्षे धर्मप्रत्यक्षे वा गौरवात् ।

पृ० १४ पं० ११ एकत्वेनाङ्गीकृतास्विति । एकैका एव नीलारुणादिव्यक्तयो नित्याः, न च नीलो नष्ट रक्त उत्पन्न इति प्रत्ययात्तासामनित्यत्वमिति वाच्यम् आश्रयनिष्ठनाशाप्रतियोगित्वस्य गुणे आरोपेण ध्वनिगतनाशप्रतियोगित्वस्य शब्दे आरोपेण उत्पन्नः ककार इति प्रतीतिवत् रक्त उत्पन्नः इति प्रतीतेरुपपत्तेगुणानां नित्यत्वमिति मतेनेदम् ।

तदुक्तं काव्यप्रदीपे—'ननु पटादिनिष्ठानां शुक्लादिगुणानां गुडतण्डुलादिनिष्ठानां पाकादिक्रियाणां च भेदस्य प्रत्यक्षतः सिद्धौ व्यक्तिसंकेतपक्षोक्तदोषः ( आनन्त्यव्यभिचाररूपः ) समान इति चेद्—न गुणादीनां स्वरूपतः एकरूपाणामाश्रयभेदाद्भेद इव लक्ष्यते यथैकस्य मुखस्य खड्गमुकुराद्यालम्बनभेदात्' इति ।

अत्रोद्योतः 'भेद इवेति प्रत्यभिज्ञालाघवादिभिः शुक्लादीनामैक्यसिद्धौ भेदप्रतीतिराश्रयौपाधिकी तत्सम्बन्धस्यैव च नाशोत्पादाविति भावः' इति ।

पृ० १४ पं १३ कपालनाश इति । समवायिकरणनाशस्य द्रव्यनाशं प्रति प्रयोजकतया कपालनाशानन्तरमेव घटनाशाभ्युपगमेन कपालनाशान्तरं क्षणमात्रं घटस्थितेर्नैयायिकैरभ्युपगमादिति भावः ।

पृ० १५ पं० १४ सूत्रकार इति । इन्द्रियार्थसंनिकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षमिति न्यायसूत्रकार इत्यर्थः ।

पृ० १५ पं० १७ ज्ञानकरणकत्वादिति । अनुमितौ व्याप्तिज्ञानस्य उपमितौ सादृश्यज्ञानस्य शाब्दे शब्दज्ञानस्य अर्थापत्तावुपपाद्यज्ञानस्य स्मृतौ पूर्वानुभवस्य करणत्वमित्यर्थः ।

पृ० १५ पं० २१ जन्यज्ञानेति । प्रत्यक्षं जन्यमस्मदादीनां नित्यमीश्वरस्य अनुमित्यादिकं तु जन्यमेवेति भावः । तादृशानां जन्यज्ञानमात्रवृत्तीनाम् ।

पृ० १६ पं० १ अन्ये त्विति । सुखं द्रव्यान्तरसंयोगासमवायिकारणकं नित्यद्रव्यजन्यविशेषगुणत्वात् इत्यनुमानाकारः ।

इष्टे वेति । मनसो विभुत्ववादिमते एककालावच्छेदेन पादे मे सुखं शिरसि मे वेदनेति ज्ञानानुभव इष्ट एवेति भावः ।

पृ० १६ पं० १७ ननु बाह्यैकेन्द्रियेति । शब्दो गुणः बाह्यैकेन्द्रियग्राह्यत्वात् रूपादि-

वत् व्यतिरेके घटादिवत्। न च वायौ व्यभिचारः, बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे उद्भूतरूपस्य कारणतया वायोः प्रत्यक्षत्वानभ्युपगमादिति भावः। वायाविति। चाक्षुषद्रव्यप्रत्यक्षे उद्भूतरूपं त्वाचद्रव्यप्रत्यक्षे च उद्भूतस्पर्शः कारणमिति मतेनेदम्।

पृ० १६ पं० २७ प्रकारताविशेष्यतादिविषयतारहितमिति। ननु विषयता प्रकारताख्या विशेष्यताख्या संसर्गताख्या चेति त्रिविधा तत्र निर्विकल्पके त्रिविधविषयताशून्यत्वसत्वेन निर्विषयत्वमेव स्यादिति चेन्न निर्विकल्पके तुरीयविषयताया अभ्युपगमेनादोषात्।

पृ० १७ पं० ८ समवायघटितसामानाधिकरण्येनेति। समवायेन यत्स्वाधिकरणं तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वसंबन्धेनेत्यर्थः स्वसमवायिसमवेतत्वसम्बन्धेनेति यावत्। एकार्थसमवायेनेति। एकस्मिन्नर्थे उभयोः समवायः इत्यर्थः। यथा महत्वं द्रव्ये समवायेन वर्तते तत्रैव गुणक्रिये अपि इति एकार्थसमवायसम्बन्धेन महत्वं गुणक्रिययोः तन्निरूपितसमवायसम्बन्धावच्छिन्ना वृत्तिता च गुणक्रियागतजातौ स्वाश्रयसमवेतसमवेतत्वसम्बन्धेनेति यावत्।

पृ०१७ पं० १० कालादिचाक्षुष इति। इदानीं घट इति प्रतीत्या कालस्यापि चाक्षुषत्वमिति भावः। तदुक्तं वेदान्तपरिभाषायाम् 'नीरूपस्यापि कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तत्क्षणविशेषविषयकत्वेन न तत्राव्याप्तिः' इति। अत्र दीपिका 'इदानीं घटो वर्तत' इत्येवंरूपानन्यथासिद्धप्रतीतिबलेन महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य कालातिरिक्तद्रव्यचाक्षुषताप्रयोजकत्वकल्पनात्' इति।

पृ० १७ पं० १४ मानसेऽपीति। 'कारणत्वं चान्यत्र पारिमाण्डल्यादिभ्य' इति प्रशस्तपादभाष्यमुपादाय आदिपदेन परममहत्परिमाणं गृह्यते इत्युदयनाचार्यग्रन्थः आत्मपरिमाणातिरिक्तमहत्परिमाणपरः तेन आत्ममानसे परममहत्परिमाणस्य हेतुतायां नक्षतिरिति वदतां मतेनेदम्। संकोचे मानाभाव इति मतेनाह–नेत्यन्य इति।

पृ० १७ पं० २७ अभावस्त्रिधेति। नन्वभावानां त्रैविध्यमनुपपन्नम् उत्पन्नेऽपि घटे तदीयकारणानां कपालसंयोगदण्डादीनां सद्भावेन उत्पन्नस्य पुनरुत्पादवारणाय प्रागभावस्याप्यवश्यमङ्गीकर्तव्यत्वात्। ततश्च घटोत्पत्तिं प्रति प्रागभावस्यापि हेतुतया तस्यैव तदानीमभावेन न पुनर्घटोत्पाद इति 'अयं घटः स्वोत्पत्तिक्षणावृत्तिकारणाजन्यः स्वोत्पत्तिद्वितीयक्षणानुत्पन्नत्वात् इत्यनुमानेन प्रागभावसिद्धिः। तस्य सामग्रीनाश्यत्वेन उत्पत्तिक्षणावृत्तित्वादिति चेद्—

न—जन्यद्रव्यं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकद्रव्याभावस्य हेतुताभ्युपगमेनैवोक्तदोषवारणसंभवात् प्रागभावस्यघटं प्रति हेतुताङ्गीकारानावश्यकतया प्रागभावासिद्धेः। घटो ध्वस्त इति प्रतीतिबलेन ध्वंसस्य सिद्धावपि प्रागभावस्य सिद्धौ मानभावः घटो भविष्यतीत्यत्र भविष्यत्वं वर्तमानकृतिध्वंसाधिकारणकालोत्पत्तिकत्वरूपमिति न भविष्यतीतिप्रतीत्यापि प्रागभावसिद्धिप्रत्याशेति तत्त्वम्।

१८ पं० १२ चार्वाकैकदेशिन इति। यथाहुः—अन्यत्र वर्तमानस्य ततोऽन्यस्थानजन्मनि। तस्मादचलतः स्थानाद् वृत्तिरित्यतियुक्तता॥ नायाति न च तत्रासीदस्ति पश्चान्नचांशवत्। जहाति पूर्वं नाधारमहो व्यसनसंततिः॥ इति।

१८ पृ० पं० २६ व्यक्तेरभेद इति। व्यक्तेरित्यत्र निष्ठत्वं षष्ठ्यर्थः, तथा च स्वाश्रयीभूतव्यक्तिनिष्ठो भेदाभावः स्वस्याकाशत्वस्य जातित्वे बाधकः स्वमाकाशत्वं तदा-

श्रयीभूता व्यक्तिराकाशरूपा तत्राकाशभेदः 'आकाशं न' इति प्रतीतिसाक्षिको न वर्त्तते इति भेदाभावसत्त्वादाकाशत्वं न जातिः ।

नचाकाशे आकाशभेदस्यासत्त्वेऽपि घटभेदस्य 'आकाशं घटो न' इति प्रतीतिसाक्षिकस्य सत्त्वेन भेदसामान्याभावस्यासत्त्वादाकाशत्वं जातिः स्यादेवेति वाच्यम्, भेदः स्वाश्रयीभूतव्यक्तिप्रतियोगिको ग्राह्यः, तथा च स्वाश्रयीभूतव्यक्तिप्रतियोगिको भेदाभावः स्वस्य जातित्वे बाधक इत्यर्थस्य लाभेनाकाशे आकाशभेदाभावस्य सत्त्वेन आकाशत्वे जातित्वबाध इत्यदोषात् ।

तुल्यत्वं स्वभिन्नजातिसमनियतत्वं स्वस्य जातित्वे बाधकम्, एवं कलशत्वं तद्भिन्नजातिर्घटत्वं तत्समनियतत्वं कलशत्वे इति कलशत्वे जातित्वबाधः. 'अयं घटः' अयं घटः' इत्यनुगतधियः 'अयं कलशः अयं कलशः' इत्यनुगतधियश्च घटत्वजाति कलशत्वजाति वा ऽऽदायोपपत्तौ घटत्वकलशत्वयोरुभयोर्जातित्वस्वीकारे मानाभावस्तुल्यत्वस्य जातित्वबाधकत्वे बीजमिति बोध्यम् ।

परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः संकरः, भूतत्वमूर्तत्वयो जातित्वे बाधकः । मूर्तत्वाभाव आकाशे तत्र च भूतत्वं, भूतत्वाभावो मनसि तत्र च मूर्तत्वम्, उभयोः पृथिव्यादिचतुष्टये समावेश इति सांकर्याद् भूतत्वं मूर्तत्वं वा न जातिरिति ध्येयम् । सांकर्यस्य जातित्वबाधकत्वे मानं तु 'जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभावः' इति नियमस्य भङ्गप्रसङ्ग एवेति बोध्यम् । वैशिष्ट्यं च स्वसामानाधिकरण्य स्वाभावसामाधिकरण्योभयसंबन्धेन । उक्तोभयसंबन्धेन यज्जातिविशिष्टजातित्वं यत्र तत्र तज्जातिव्यापकत्वमिति नियमः इष्टश्च पृथिवीत्वव्यापकेद्रव्यत्वादौ एताहशनियमभङ्गापत्तिरेव सांकर्यस्य जातित्वबाधकत्वे मानम् । प्रकृते यदि भूतत्वमूर्तत्वे जाती स्यातां तदा जातिर्भूतत्वजातिस्तदधिकरणपृथिव्यादिवृत्तित्वस्य तदभावाधिकरणमनोवृत्तित्वस्य च मूर्तत्वजातौ सत्त्वेन जातिविशिष्टजातित्वावच्छिन्नं मूर्तत्वं जातमिति मूर्तत्वे एवं भूतत्वं तदधिकरणाकाशनिष्ठमूर्तत्वाभावप्रतियोगित्वमेव न तु तदभाव इति नियमभङ्गः स्यात । वस्तुतस्तु उक्तनियमे मानाभावेन सांकर्यस्य जातिबाधकत्वं नव्या न सहन्त इति ध्येयम् ।

अप्रामाणिकानन्तपदार्थकल्पनाविश्रान्तेरभावो ऽनवस्था जातिवृत्तिधर्मस्य जातित्वे बाधिका । घटत्वपटत्वादिजातिषु इयं जातिरियं जातिरित्यनुगतप्रतीत्या यदि काचि जातिरभ्युपगम्यते तदा तस्यां काचिदन्या जातिरभ्युपेया तस्यां चान्येत्यनवस्था स्यादिति न जातौ जातिरङ्गीकर्तव्येति भावः ।

ननु निखिलजातिषु एकस्या जातेरङ्गीकारे तस्यां न जात्यन्तरं व्यक्तेरैक्यादित्यनवस्थाया जातिबाधकत्वं विफलमिति चेत्? न, निखिलजातिष्वेका जातिस्तत्र तदाश्रयीभूतघटत्वादिजातिषु चैका एवमग्रेऽपीत्येवंरीत्या ऽनवस्थेत्याशयात् ।

रूपस्य विशेषलक्षणस्य स्वतोव्यावर्त्तकत्वस्य हानिः रूपहानिर्विशेषवृत्तेर्धर्मस्य जातित्वे बाधिका । तथा च जात्याश्रयस्य जातिपुरस्कारेणैव व्यावर्त्तकत्वनियमात् विशेषत्वजातेरङ्गीकारे विशेषत्वेनैव रूपेण विशेषाणां व्यावर्त्तकतया स्वतोव्यावर्त्तकत्वरूपस्य विशेषलक्षणस्य भङ्गापत्तिरिति भावः ।

नचोक्तनियमे मानाभाव इति वाच्यम्, नियमानङ्गीकारे परमाणुगतैकत्वानां तत्तद्व्यक्तित्वेनैव परमाण्वन्तरभेदसाधकत्वसम्भवे विशेषपदार्थस्यैवासिद्धिप्रसङ्गात् ।

प्रतियोगिताऽनुयोगितान्यतरसम्बन्धेन समवायाभावः समवायाभाववृत्तिधर्मयोर्जातित्वे बाधकः । यः समवायेन कुत्रचित्तिष्ठति तत्र प्रतियोगितासम्बन्धेन, यत्र तिष्ठति तत्रानुयोगितासम्बन्धेन समवायो वर्तते । समवायो ऽभावो वा न समवायेन कुत्रचित्तिष्ठति न वा समवायाभावयोः कश्चित्समवायेन तिष्ठतीति समवाये अभावे च प्रतियोगिताऽनुयोगितान्यतरसम्बन्धेन समवायाभावो वर्त्तत इति समवायत्वमभावत्वं वा न जातिरिति भावः ।

ननु यदि समवायत्वस्याभावत्वस्य च जातित्वाङ्गीकारः स्यात्तदा समवायेनैव तौ समवायाभावयोस्तिष्ठत इति अनुयोगितासम्बन्धेन समवायस्य समवायाभावयोस्सत्त्वात्कथं जातित्वबाध इति चेत् न, प्रतियोगिताऽनुयोगितान्यतरसम्बन्धेन जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायाभावः समवायाभाववृत्तिधर्मयोर्जातित्वे बाधक इति स्वीकारेणादोषात् । एवञ्च अनुयोगितासम्बन्धेन रूपे जात्यतिरिक्तप्रतियोगिकसमवायाभावसत्त्वेन व्यभिचारवारणाय प्रतियोगित्वनिवेशः । आत्मनि प्रतियोगितासम्बन्धेन समवायासत्त्वेन व्यभिचारवारणायानुयोगितानिवेशः इति बोध्यम् ।

न च समवायस्यैकत्वेन तद्वृत्तिसमवायत्वस्य 'व्यक्तेरभेदः' इत्यनेन जातित्वबाधात् तस्यासबन्ध एतदुदाहरणत्वं न सम्भवतीति वाच्यम् , समवायो नानेति नव्यमते व्यक्तेरभेद. इत्यनेन जातित्वबाधासम्भवेन असम्बन्धोदाहरणत्वस्य सौष्ठवात् ।

ननु जातौ जात्यतिरिक्तप्रतियोगिकत्वविशिष्टसमवायस्य प्रतियोगितया ऽनुयोगितया चासत्त्वेनासम्बन्ध इत्यनेनैव जातिबाधसम्भवेऽनवस्थायो जातित्वबाधकत्वकथनं विफलमिति चेत् न जात्यतिरिक्तेत्यत्र जातिपदस्यासमवेतवृत्तिजातिपरतयाऽदोषात् ।

पृ० १८ पं० ३३ यथोपेक्षात्वमिति । अयमाशयः—यत्र समूहालम्बनं घटः पटश्च इति ज्ञानं जातं तस्य च एकविषयस्मारकत्वमपरविषयास्मारकत्वं च तत्र ज्ञाने उपेक्षात्वजात्यनभ्युपगमे सकलविषयस्मारकत्वम् अभ्युपगमे च सकलविषयास्मारकत्वं स्यादिति यद्विषयास्मारकत्वं तस्य तद्विषयावच्छेदेने उपेक्षात्वमभ्युपगन्तव्यम् अन्यविषयांशे च तदभावः इति तद्विषयकस्मृतौ तद्विषयावच्छिन्नमुपेक्षान्यत्वं प्रयोजकत्वक्तव्यमित्यव्याप्यवृत्तित्वादुपेक्षात्वं न जातिरिति ।

पृ० १९ पं० १ सङ्करान्तर्गतमिति । वस्तुतस्तु चाक्षुषत्वव्याप्यमुपेक्षात्वं नानैव स्मृतिजनकतावच्छेदकभेदप्रतियोगितावच्छेदकमुपगन्तव्यं भेदकूटस्य कारणतावच्छेदकत्वे मानाभावात् तथा च न जातिसंकर इति न संकरान्तर्गतमिति आंशिकत्वमपि स्वातन्त्र्येण जातिबाधकमिति बोध्यम् ।

पृ० १९ पं० ११ दृष्टान्तासिद्धेरिति । स्वप्ने हि बाह्यमेव देशकालान्तरगतमदृष्टोद्बोधितसंस्कारवशात् स्मर्यमाणं निद्रादूषितमनस्कतया भ्रान्त्या संनिहितदेशकालमिव मन्यते, स्फुटतरं चैतदनन्तरदिवसानुभूतस्य स्वप्ने वर्तमानावभासदर्शनादित्यन्यत्रापि स्वप्ने तथाङ्गीकर्तव्यम् । शिरश्छेदादयोऽप्यन्यत्रावगता एव दोषवशात्स्वसम्बन्धित्वेनावगम्यन्ते सर्वत्र संसर्गमात्रमसदेव भासते संसर्गिणस्तु सन्त एव सेयं विपरीतख्यातिरित्युच्यते मीमांसकैः । शुक्तिरजतज्ञानेऽपि विद्यमानैव रजतत्वजातिर्विद्यमानस्यैव शुक्तिशकलस्यानात्मभूतैवात्मतयाऽवगम्यते । एवं बन्ध्यासुतादिष्वपि विद्यमान एव सुतशब्दार्थो वन्ध्यान्विततया तत्पदसंनिधिदोषादवगम्यते । एवं च स्वप्नादिप्रत्यया अपि बाह्यविषया इति दृष्टान्तासिद्ध्या न स्तम्भादिप्रत्ययानामनात्मविषयकत्वमध्यसातुं शक्यमिति ।

पृ० ११ पं० २२ त्रिपुटीति । ज्ञाने ज्ञाता ज्ञानं ज्ञेयं चेति त्रिकं प्रतिभासते । एतत्त्रयं च त्रिपुटीशब्देन व्यवह्रियते । अत एव घटादिज्ञानानन्तरं ज्ञातुर्ज्ञानस्य ज्ञेयस्य वा ज्ञातवानहं न वेत्यादिरूपा न संशया इति मीमांसकाः।

२०-१३ व्यभिचाराच्चेति । तथा च-'सहोपलम्भनियमादभेदो नीलतद्धियोः' इति बौद्धोक्तानुमानासंभव इति भावः ।

२१-३२ सकलधूमप्रत्यक्षेति । सन्देहस्य प्रत्यक्षरूपत्वेन धर्मीन्द्रियसंनिकर्षं विना संशये धर्मिणो भानं न स्यादिति तद्भाननिर्वाहार्थं सामान्यलक्षणाङ्गीकर्तव्येति भावः । एतेन धर्मिज्ञानस्य संशयहेतुत्वे मानाभावेन असन्निकृष्टधूमादीनामज्ञानेऽपि तद्धर्मिकसंशयसम्भवात् तदनुरोधेन सामान्यलक्षणाङ्गीकारो व्यर्थ इत्यपास्तम् ।

२२-१ सुखादाविच्छेति । सिद्धे इच्छाविरहात् असिद्धस्याज्ञानात ज्ञानेच्छयोश्च समानविषयकत्वेन कार्यकरणभावात् मम तु सुखत्वादिना ज्ञातेषु सर्वेषु सिद्धं विहाय असिद्धे इच्छा भवतीति भावः । घटस्याज्ञानादिति। अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादिति भावः । शाब्दबोधोऽपीति । तत्र शक्तिग्रहासंभवादिति भावः ।

न च सामान्यलक्षणस्वीकारे प्रमेयत्वेन सकलपदार्थविषयकज्ञानसत्त्वात् सर्वज्ञत्वापत्तिरिति वाच्यम् विशिष्य सर्वपदार्थविषयकज्ञानाभावेन तदनापत्तेः ।

२२-७ प्रसिद्धधूम इति । प्रसिद्धधूमे धूमत्वेन व्याप्तिज्ञानं तद्धूमत्वेन वा आद्ये संशयासिद्धिः द्वितीये तु धूमत्वावच्छेदेन व्याप्तिग्रहस्य तद्विरोधितया संशये बाधकाभाव इति भावः ।

२२-१० तत्प्रकारकनिश्चयेति। समानविषयकत्वे सत्यपि समानप्रकारकज्ञानाभावेनेच्छाकृत्योरभावे समानप्रकारकत्वेन कार्यकारणभावस्य क्लृप्ततया समानविषयकत्वेनकार्यकारणभावे मानाभावाद् गौरवाच्चेति भावः ।

इति प्रत्यक्षपरिच्छेदः ।

२३-१९ ज्ञातसम्बन्धस्येति । ज्ञातः सम्बन्धो व्याप्तिलक्षणो व्याप्यव्यापकयोर्दृष्टान्तधर्मिणि येन प्रमात्रा स ज्ञातसम्बन्धः तस्य एकदेशस्य व्याप्यस्य धूमादेर्दर्शनात् एकदेशान्तरे व्यापकवह्न्यादौ चक्षुराद्यसन्निकृष्टे या बुद्धिस्तदनुमानम् । यद्वा ज्ञातः सम्बन्धो यस्य एकदेशाभ्यां धूमवह्निरूपाभ्यां सह स ज्ञातसम्बन्धो महानसादिर्धर्मी एकदेशी तस्य यो धूमाख्य एकदेशः तस्य पर्वतादौ दर्शनात् एकदेशान्तरे वह्न्यादौ बुद्धिरनुमानम् इत्यर्थः । संदिग्धसाध्यवदधिकरणकमिति । अनेनसाध्यसंदेहरूपपक्षतासूचनम् ।

२३-१८ व्याप्यतावच्छेदकप्रकारकेति । तेन 'वह्निव्याप्यो धूमः' 'धूमवान् पर्वत' इति ज्ञानद्वयादेवानुमितिः, न तु वह्निव्याप्यधूमवान् पर्वत इति तृतीयं ज्ञानं कल्पयित्वानुमितिरिति भावः । इयमत्र प्रक्रिया महानसादौ वह्निसहचरितधूमदर्शने 'धूमो वह्निव्याप्य' इति व्याप्तिग्रहे जाते पश्चात् 'पर्वतो धूमवान्' इति पक्षधर्मताज्ञानात् 'पर्वतो वह्निमान्' इत्यनुमितिर्जायते व्याप्त्यनुभवस्य अनुमिति प्रति करणता तु संस्कारद्वारा इति । न च संस्कारजन्यत्वेन अनुमितेः स्मृतित्वापत्तिरिति वाच्यम् , संस्कारजन्यत्वस्य संस्कारध्वंससाधारण्येन स्मृतित्वाप्रयोजकत्वात् ।

न च व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयत्वेनानुमितिकारणत्वस्वीकारे 'वह्निव्याप्यवान् पर्वत' इति ज्ञाने व्याप्यतावच्छेदकस्य धूमत्वस्याप्रकारतयास्यानुमितिजन-

कत्वं न स्यादिति वाच्यम्, इष्टापत्तेः तदुक्तं गादाधर्याम् 'मीमांसकैर्यथा वह्निव्याप्यवानयमिति व्याप्यतावच्छेदकानवगाहिपरामर्शादनुमितिरपलप्यते धूमो वह्निव्याप्यो धूमवान् पर्वत इति समूहालम्बनाच्चानुमितिरुपेयते' इति।

न च तथापि व्याप्यतावच्छेदकीभूतधूमत्वप्रकारकात् 'धूमवान् पर्वत' इति ज्ञानात् 'वह्निव्याप्यो धूम' इति ज्ञानं विनाप्यनुमितिः स्यादिति वाच्यम्, गृह्यमाणव्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयस्यानुमितिकारणताभ्युपगमेनादोषादिति दिक्।

२६-२१ व्यापकवत्पक्षस्येति। पर्वतस्य प्रत्यक्षेऽपि वह्निमत्पर्वतस्य न प्रत्यक्षमिति कथं वह्निमत्पर्वतस्य स्मृतिः स्यादिति भावः।

२३-२९ तदनुव्यवसाये—वह्निव्याप्यधूमवत्पर्वतं जानामीत्येवंरूपे, तद्विशिष्टवैशिष्ट्यप्रत्यक्षे—वह्निव्यापकधूमवत्पर्वतवान् देश इत्येवंरूपे, तत्सदृशज्ञानजन्योपमितौ—वह्निव्याप्यधूमवत्पर्वतसदृशो महानसपदवाच्य इत्येवंरूपायाम्, विशिष्टशाब्दबोधे—तदादिपदजन्ये वह्निव्याप्यधूमवत्पर्वतवान्देश इत्येवंरूपे, तत्स्मरणे—वह्निव्याप्यधूमवान् पर्वत इत्येवंरूपे इत्यर्थः। अनुव्यवसाये विषयत्वेनेति। लौकिकसन्निकर्षजन्यज्ञानीयविलक्षणविषयतासम्बन्धेन सामान्यतः प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणत्वमित्यर्थः।

२४-१ विशेषणतावच्छेदकप्रकारकनिश्चयत्वेनेति। नन्विदमयुक्तं तथा सति विशिष्टबुद्धेः व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानत्वेनानुमितित्वातिव्याप्तेर्दुष्परिहरत्वादिति चेन्न-विशिष्टवैशिष्ट्यबोधं प्रति विशेषणतावच्छेदकप्रकारकसंशयान्यत्वेनैव हेतुता न तु तादृर्संशयान्यज्ञानत्वरूपनिश्चयत्वेन तथा सति इच्छादिजनकविशिष्टज्ञाननाशेऽपि रक्तत्वादिविशिष्टदण्डादिरूपविषयप्रकारेण 'रक्तदण्डमिच्छामि' रक्तदण्डं द्वेष्मि' इति इच्छाद्वेषयोः साक्षात्कारस्यानुभवसिद्धस्यापलापापत्तेः, एवं च विशेषणतावच्छेदकप्रकारकनिश्चयत्वेनेत्यस्य विशेषणतावच्छेदकप्रकारकसंशयान्यत्वेनेत्यर्थो बोध्य इत्यलम्।

२४-२ सादृश्यज्ञानत्वेनेति। पदवाच्यत्वविशिष्टवह्निव्याप्यधूमवत्पर्वतसादृश्यावच्छिन्नधर्मिज्ञानत्वेनेत्यर्थः। अतिदेशवाक्यार्थज्ञाने व्याप्यवत्त्वस्य धर्मितावच्छदककोटिनिविष्टतया भानाद्धर्मितावच्छदकघटकांशे च संशयस्यानभ्युपगमात् उपमितिजनकतायां निश्चयत्वनिवेशनमफलमिति व्याप्यतावच्छेदकप्रकारकपक्षधर्मताशालिनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावज्ज्ञानत्वरूपस्यानुमितिलक्षणस्य नातिव्याप्तिरिति भावः

२४-२ अवान्तरवाक्यार्थज्ञानत्वेनेति। तथा च शाब्दकारणतायां निश्चयत्वस्याप्रवेशान्नातिव्याप्तिरिति भावः। परोक्षसंशयानभ्युपगमेन संशयान्यत्वस्य निवेशनीयत्वेऽपि पदजन्यबुद्धावव्यावर्तकतया ज्ञानत्वस्य न निवेश इति तत्त्वम्।

२४-३ अनुभवत्वेनेति। यदि तु संस्कारस्य स्वजन्यस्मृतिनाश्यतया प्रथमस्मरणेनैव पूर्वानुभवजन्यसंस्कारनाशे स्मरणोत्तरस्मरणाभावापत्त्या अनुभवत्वेन स्मृतिकारणताभ्युपगन्तुमशक्येत्युच्यते तदाऽनुमितिलक्षणे ज्ञानपदमनुभवपरं द्रष्टव्यम्, तथा च व्याप्यतावच्छेदकप्रकारकपक्षधर्मतानिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावत्त्वे सति अनुभवत्वमनुमितित्वमिति सिद्धम्।

२४-६ न चेति। अन्वयव्याप्तिः साध्यवदन्यावृत्तित्वरूपा, व्यतिरेकव्याप्तिश्च साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपा यथा वह्न्यभावव्यापकीभूतोऽभावो धूमाभावः

तत्प्रतियोगित्वं धूमे इति। अनुमितिलक्षणे अन्वयाप्तिरूपादाने वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवान्पर्वत इति निश्चयजन्यानुमित्यसंग्रहः व्यतिरेकव्याप्तेश्चोपादाने वह्निमदन्यावृत्तिधूमवान्पर्वत इति निश्चयजन्यानुमित्यसंग्रह इति भावः। व्यभिचारज्ञानं साध्याभाववद्वृत्तित्वज्ञानं तद्विरोधि अन्वयव्याप्तिज्ञानं मणिमन्त्रादिन्यायेन व्यतिरेकव्याप्तिज्ञानं चेत्यर्थः।

२४-८ व्यभिचारधीविरोधीति। साध्याभाववद्वृत्तिधूम' इति धीविरोधिनी धीः 'साध्यभाववदवृत्तिर्धूमः' इति 'वन्ह्यभावव्यापकीभूताभावप्रतियोगी धूमः' इति च तद्विषयतावच्छेदकं धूमत्वं तत्प्रकारकपक्षधर्मताज्ञानं 'धूमवान् पर्वत' इत्याकारकं तज्जन्यं ज्ञानं पर्वतो वह्निमानित्याकारकं तदेवानुमितिरिति समन्वयः।

१४ भूतभाविलिङ्गेनेति। इयं शाला अतीतवह्निमती अतीत धूमात्, इयं शाला भाविवह्निमती भाविधूमात् इत्यादिनेत्यर्थः। नन्वेवं धूमादेरनुमित्यहेतुत्वे धूमादिति हेतुपञ्चम्यनुपपत्तिरितिचेत् सत्यम् धूमादित्यत्र धूमपदस्य धूमज्ञाने पञ्चम्याश्च ज्ञाप्यत्वे लक्षणेत्यदोष इति।

२४-१६ साध्यवदिति। साध्यवत्पदं लक्षणया साध्यवत्प्रतियोगिकपरं तस्य चाभेदसम्बन्धेन अन्यपदार्थैकदेशे भेदेऽन्वयः न तु साध्यवत्पदार्थस्य प्रतियोगितासम्बन्धेन भेदेऽन्वयः, नामार्थयोर्भेदेनान्वयस्याव्युत्पन्नत्वात् भेदवतश्च निरूपितत्वसम्बन्धेन वृत्तित्वे तस्य च प्रतियोगितासम्बन्धेनाभावे। एवञ्च साध्यवत्प्रतियोगिकभेदवन्निरूपितवृत्तित्वाभावो व्याप्तिरिति तदर्थः।

२४-१९ अत्रेति। अयम्भावः साध्यतावच्छेदकसम्बन्धावच्छिन्ना या साध्यनिष्ठाऽवच्छेदकता तन्निरूपितावच्छेद्यतावती या प्रतियोगिता तन्निरूपकभेदवन्निरूपितवृत्तित्वाभावो व्याप्तिरित्यर्थः एवं च समवायेन वह्निमान् न इति प्रतीतिसाक्षिकभेदीयप्रतियोगितावच्छेदकता वह्निनिष्ठा सा च न साध्यतावच्छेदकसम्बन्धावच्छिन्ना या च साध्यतावच्छेदकसम्बन्धावच्छिन्ना संयोगेन वह्निमान्नेति भेदीया प्रतियोगितावच्छेदकता तन्निरूपकप्रतियोगिताकभेदश्च न पर्वते इति नाव्याप्तिरिति।

२४-२१ साध्यवत्त्वावच्छिन्नेति। अयं भावः साध्यतावच्छेदकसम्बन्धावच्छिन्ना साध्यतावच्छेदकावच्छिन्ना च या साध्यनिष्ठावच्छेदकता तन्निरूपितावच्छेद्यतावती या प्रतियोगिता तन्निरूपकभेदवन्निरूपितवृत्तित्वाभावो व्याप्तिरित्यर्थः। अयं भावः पर्वतः संयोगेन महानसीयवह्निमान्नेति भेदीयप्रतियोगितावच्छेदकता न साध्यतावच्छेदकमात्रावच्छिन्ना इति तादृशो भेदो धर्तुं न शक्यते यश्च तादृशः संयोगेन वह्निमान्नेति प्रतीतिसाक्षिकः स च न पर्वते इति नाव्याप्तिः। इदमुपलक्षणम्-येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन साध्यवदन्यनिरूपितवृत्तित्वं बोध्यम् तथा च—साध्यतावच्छेदकसम्बन्धावच्छिन्ना साध्यतावच्छेदकावच्छिन्ना च या साध्यनिष्ठावच्छेदकता तन्निरूपितावच्छेद्यतावती या प्रतियोगिता तन्निरूपकभेदवन्निरूपिता या हेतुतावच्छेदसम्बन्धावच्छिन्ना वृत्तिता तदभावो व्याप्तिरित्यर्थः एवं च संयोगेन वह्निमान्नेति प्रतीतिसाक्षिकभेदवद्धूमावयवनिरूपिता समवायसम्बन्धावच्छिन्ना वृत्तिता यद्यपि धूमे वर्तते तथापि साध्यवद्भिन्ननिरूपितहेतुतावच्छेदकसंयोगसम्बन्धावच्छिन्नवृत्तितायाः अभावो वर्तत एवेति नाव्याप्तिः।

२४-२२ वृत्तितात्वावच्छिन्नप्रतियोगितेति । अयं भावः साध्यतावच्छेदकसम्बन्धा वच्छिन्ना साध्यतावच्छेदकावच्छिन्ना च या साध्यनिष्ठावच्छेदकता तन्निरूपितावच्छेद तावती या प्रतियोगिता तन्निरूपको योभेदस्तद्वन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावो व्याप्तिः एवं च धूमवान् वह्नेरित्यत्र धूमवदन्यजलनिरूपितवृत्तित्वं वह्नौ नास्तीति प्रतीतिसाक्षिकाभावीया प्रतियोगिता वृत्तितात्वावच्छिन्ना यथा वर्तते तथा निरूपितत्वसम्बन्धेन जलावच्छिन्नापि वर्तते इति इति तादृशाभावो धर्तुं न शक्यते किन्तु धूमवदन्यनिरूपितवृत्तित्वं नास्तीति एवंस्वरूपः स च न वह्नौ इति नातिव्याप्तिः । वृत्तितात्वनिष्ठावच्छेदकताकप्रतियोगिताकेत्यस्य वृत्तितात्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपिका सती वृत्तितात्वनिष्ठावच्छेदकता निरूपिका या प्रतियोगिता तन्निरूपिकेत्यर्थः इति भावः ।

२४-२७ हेतुसमानाधिकरणेति । पर्वतो वह्निमान्धूमादित्यत्र हेतुर्धूमस्तदधिकरणं पर्वतस्तन्निष्ठोत्यन्ताभावः घटो नास्तीतिप्रतीतिसाक्षिकस्तत्प्रतियोगिता घटे तदवच्छेदकं घटत्वमनवच्छेदकं साध्यतावच्छेदकं वह्नित्वं तदवच्छिन्नसामानाधिकरण्यं धूमे इति लक्षणसमन्वयः ।

२४-३० अत एवेति । प्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकमिति निवेशादेवेत्यर्थः । अन्यथा वह्निमान्धूमादित्यत्र हेतुर्धूमस्तदधिकरणं पर्वतस्तन्निष्ठोऽत्यन्ताभावो महानसीयवह्निर्नास्तीति प्रतीतिसाक्षिक इति चालनीन्यायेन प्रतियोगी महानसीयवह्न्यादिरप्रतियोगी न कोऽपि वह्निरित्यव्याप्तिः स्यात् मम तु प्रतियोगितावच्छेदकं महानसीवह्नित्वमनवच्छेदकं वह्नित्वं तदवच्छिन्नसामानाधिकरण्यं धूम इति लक्षणसमन्वयः ।

दण्डिमानिति । मठो दण्डिमान् दण्डसंयोगादित्यत्र दण्डसंयोगाधिकरणमनुयोगितासम्बन्धेन मठः तन्निष्ठोऽभावः तद्दण्डी नास्तीति तदभावीया प्रतियोगिता तत्तद्दण्डिनिष्ठा प्रतियोगितावच्छेदको दण्डः स एव साध्यतावच्छेदक इत्यव्याप्तिः स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेन दण्डत्वस्य साध्यावच्छेदकत्वाङ्गीकारे तु दण्डसंयोगाधिकरणे स्वाश्रयाश्रयत्वसम्बन्धेन दण्डत्ववान्नास्तीति वक्तुं न शक्यते अपि तु घटत्ववान्नास्तीत्येवमादिरिति नाव्याप्तिः ॥

रूपत्वव्याप्यजातिमत्वान् पृथ्वीत्वादित्यत्र पृथिवीत्वाधिकरणे पीतघटे नीलो नास्ति, रक्तघटे पीतो नास्तीत्येवं चालनीन्यायेन सर्वेषामपि रूपाणामभावसत्वात्सर्वा अपि रूपत्वव्याप्या नीलत्वादिजातयः प्रतियोगितावच्छेदिकाः संपन्नास्ता एव च साध्यतावच्छेदिका इति हेत्वधिकरणनिष्ठात्यन्ताभावीयप्रतियोगितानवच्छेदिका न संपन्ना इत्यव्याप्तिः ॥

स्वाश्रयसंयुक्तत्वादीति । आदिपदेन स्वाश्रयसमवायसम्बन्धस्य परिग्रहः । स्वं रूपत्वव्याप्यजातित्वं तदाश्रयः रूपत्वव्याप्या नीलत्वादिजातिः तत्समवायो रूपे । एवञ्च पृथिवीत्वाधिकरणे स्वाश्रयसमवायसम्बन्धेन रूपत्वव्याप्यजातिमत्वान्नास्तीत्यभावो धर्तुं न शक्यते पृथिवीत्वाधिकरणे स्वाश्रयसमवायसम्बन्धेन रूपत्वव्याप्यजातित्वतो नीलरूपादेः प्रतियोगिनः सत्वादिति प्रतियोगितावच्छेदकं पूर्वोक्तरीत्या नीलत्वादिकमनवच्छेदकं रूपत्वव्याप्यजातित्वं तदेव साध्यतावच्छेदकमित्यदोषः ॥

२५-३ नन्वेवमपि वह्निमान् धूमादित्यत्र समवायेन धूमाधिकरणं धूमावयवस्तन्निष्ठोऽभावः वह्निर्नास्तीति प्रतीतिसाक्षिकः तत्प्रतियोगितावच्छेदकं वह्नित्वमित्यमित्थं व्याप्तिरत आह–हेतुतावच्छेदकसम्बन्धेनेति ।

ननु द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यादौ विशिष्टं शुद्धान्नातिरिच्यते इति स्या-याच्छुद्धसत्ताधिकरणं गुणस्तन्निष्ठोत्यन्ताभावः द्रव्यत्वं नास्तीति प्रतीतिसाक्षिकस्तदीय-प्रतियोगितावच्छेदकं द्रव्यत्वत्वं तदेव साध्यतावच्छेदकं प्रतियोगितानवच्छेदकं न जात-मित्यव्याप्तिरत आह—हेतुतावच्छेदकविशिष्टेति ।

न च हेतुतावच्छेदविशिष्टसत्तात्वविशिष्टसत्त्वस्य गुणे सत्वादेवं विवक्षायामप्यव्याप्ते-रप्रतीकार इति वाच्यम्—हेतुतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वविशिष्टस्य हेत्वधिकरणपदेन विवक्षणात् । एवञ्च—विशिष्टसत्तात्वावच्छिन्ननिरूपकतानिरूपिता-धिकरणत्वं द्रव्ये एव न गुणे द्रव्यं विशिष्टसत्तावदिति प्रतीतेरित्यदोष इति भावः ।

तथाच हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकतानिरूपिता-धिकरणत्वविशिष्टाभावीयप्रतियोगितानवच्छेदकं यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्य-सामानाधिकरण्यं व्याप्तिरिति लक्षणस्वरूपं निष्पन्नम् ।

२८–८ ननु कपिसंयोगि एतद्वृक्षत्वादित्यत्र एतद्वृक्षत्वाधिकरणमेतद्वृक्षः तन्निष्ठोऽ-भावः मूलावच्छेदेन कपिसंयोगो नास्तीति प्रतीतिसाक्षिकः तत्प्रतियोगितावच्छेदकं कपि-संयोगत्वमित्यव्याप्तिरत आह—अभावश्चेति। तथा च एतद्वृक्षे—शाखावच्छेदेन कपिसंयोगस्य सत्त्वात् प्रतियोगिसमानाधिकरण एव कपिसंयोगाभावो न प्रतियोगिव्यधिकरणः किन्तु घटाभावादिरेव तथा तत्प्रतियोगितावच्छेदकं घटत्वमनवच्छेदकं कपिसंयोगत्वं तदवच्छिन्नसामानाधिकरण्यमेतद्वृक्षत्वे इत्यदोषः ।

ननु प्रतियोगिव्यधिकरण इत्यस्य प्रतियोग्यनधिकरणवृत्तीत्यर्थाङ्गीकारे कपिसंयोगी एतद्वृक्षत्वादित्यत्र प्रतियोगिनः कपिसंयोगस्य अनधिकरणं गुणादिकं तन्निष्ठोऽभावः कपिसंयोगाभावः प्रतियोगिव्यधिकरणः स एव वृक्षे अधिकरणभेदेनाभावभेदानभ्यु-पगमादिति तत्प्रतियोगितावच्छेदकं कपिसंयोगत्वमित्यव्याप्तिः । न च प्रतियो-गिव्यधिकरणेत्यस्य प्रतियोग्यधिकरणावृत्तीत्यर्थः तथा च वृक्षवृत्तिकपिसंयोगाभा-वस्य प्रतियोग्यधिकरणवृत्तितया प्रतियोग्यधिकरणवृत्तिभिन्नत्वाभावान्नाव्याप्तिरिति वाच्यम् । एवमपि संयोगी सत्त्वादित्यत्र सत्त्वाधिकरणे गुणादौ वर्तमानो यः संयो-गाभावः तस्य प्रतियोग्यधिकरणद्रव्यवृत्तित्वात्प्रतियोग्यधिकरणावृत्तित्वं नास्ति किन्तू-दासीनस्यैव घटाभावादेः तत्प्रतियोगितावच्छेदकं घटत्वादिकमनवच्छेदकं संयोगत्व-मित्यतिव्याप्तेर्दुर्वारत्वादित्यत आह—हेत्वधिकरणावच्छेदेनेति—हेत्वधिकरणावच्छेदेन प्रति योग्यनधिकरणावृत्तीत्यर्थः । तथा च कपिसंयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभावो न हेत्वधिकरणावच्छेदेन प्रतियोग्यनधिकरणवृत्तिः गुणस्य हेत्वधिकरणत्वाभावात् संयोगी सत्त्वादित्यत्र च संयोगाभावस्तथा गुणस्य हेत्वधिकरणत्वादिति नाव्याप्त्यतिव्याप्ती इति भावः ।

ननु विशिष्टसत्तावान् जातेरित्यत्र जात्यधिकरणं गुणस्तन्निष्ठोऽभावः विशिष्टसत्ता-भावः स च सत्तारूपप्रतियोगिसमानाधिकरण एव इत्युदासीन एवाभावो लक्षणघटको वाच्य इत्यतिव्याप्तिरतः प्रतियोगिव्याधिकरणेत्यस्यार्थमाह—प्रतियोगितावच्छेदकेति। प्रति योगितावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणताशून्यत्वं तदर्थः । तथा च विशिष्ट-सत्तात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणत्वं न गुणे इति तन्निष्ठोऽभावः विशिष्टसत्ता-भावः प्रतियोगिव्यधिकरणः संजात इति नातिव्याप्तिरिति भावः ॥

एवञ्च स्वप्रतियोगितावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणताशून्यो हेतुता-वच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकतानिरूपिताधिकरणतावान् यः

तन्निष्ठाभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति लक्षणं निष्पन्नम् ।

२९-१२ नन्वेवमपि ज्ञानवान् सत्त्वादित्यत्र सत्ताधिकरणं घटादिकं तन्निष्ठोऽभावः समवायेन ज्ञानं नास्तीतिप्रतीतिसाक्षिकः स च विषयतासम्बन्धेन ज्ञानरूपप्रतियोगिसमानाधिकरण इति प्रतियोगिव्यधिकरणो न जातः किन्तु उदासीन एव तथेत्यतिव्याप्तिरत आह-साध्यतावच्छेदकसम्बन्धेनेति । साध्यतावच्छेदकसम्बन्धश्च प्रकृते न विषयता किन्तु समवाय एव तेन च सम्बन्धेन घटे ज्ञानं न वर्तत इति प्रतियोगिव्यधिकरणो ज्ञानाभावः तत्प्रतियोगितावच्छेदकं ज्ञानत्वमिति नातिव्याप्तिः ॥

एतेन वह्निमान् धूमादित्यत्र हेत्वधिकरणे समवायेन वह्निर्नास्तीतिप्रतीतिसाक्षिकाभावमादायाव्याप्तिमाशङ्क्य हेत्वधिकरणवृत्तिरभावः साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्य इतिकस्यचिदुक्तिः परास्ता पर्वतनिष्ठस्य समवायेन वह्न्यभावस्य प्रतियोगिनो वह्नेः संयोगेन पर्वतवृत्तितया प्रतियोगिवैयधिकरण्याभावेन लक्षणाघटकत्वात् ।

२९-१९ ननु प्रतियोगितावच्छेदकावच्छिन्नस्येति-विशिष्टसत्तावान् जातेरित्यत्राव्याप्तिवारणाय प्रतियोग्यनधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वरूपं विवक्षितं तत्र प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोगिनोऽनधिकरणं विवक्षितं किम्वा प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणं विवक्षितम् आहोस्वित् यत्किञ्चित्प्रतियोग्यतावच्छेदको यो धर्मस्तदवच्छिन्नानधिकरणत्वं विवक्षितम् ।

आद्ये वृक्षः कपिसंयोगीएतद्वृक्षत्वादित्यत्राव्याप्तिः। एतद्वृक्षत्वाधिकरणनिष्ठो यो मूलावच्छेदेन कपिसंयोगो नास्तीत्यभावः तत्प्रतियोगितावच्छेदकं कपिसंयोगत्वं तदवच्छिन्नो वृक्षावृत्तिकपिसंयोगोऽपि तदनधिकरणं हेत्वधिकरणमेतद्वृक्षस्तन्निष्ठाभावीयप्रतियोगितावच्छेदकत्वमेव कपिसंयोगत्वे इति अव्याप्तिः तद्वारणार्थं यदि प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणं विवक्ष्यते तदा वृक्षः कपिसंयोगी एतद्वृक्षत्वात् इत्यत्र न दोषः । तथा हि प्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्नसामान्यस्यानधिकरणीभूतं हेत्वधिकरणमेतत्वृक्षो नास्ति किन्तु प्रतियोगितावच्छेदकघटत्वावच्छिन्नस्यानधिकरणं हेत्वधिकरणमेतद्वृक्षः तद्वृत्यभावीयप्रतियोगितावच्छेदकं घटत्वमनवच्छेदकं कपिसंयोगत्वं तदेव साध्यतावच्छेदकमित्यव्याप्त्यभावः ।

द्वितीये प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति । प्रतियोगितावच्छेदकावच्छिन्नसामान्यस्यानधिकरणमिति विवक्षिणे वह्निमान् धूमात् इत्यत्र सद्धेतुमात्रे लक्षणस्यासम्भवः। तथा हि धूमाधिकरणे पर्वते वर्तमानो यः घटाभावः पूर्वक्षणवृत्तित्वविशिष्टः तस्यैव तत्तत्क्षणावच्छेदेनाभावोऽपि वर्तते इति पूर्वक्षणवृतित्वविशिष्टघटाभावाभावः पर्वते इति विशिष्टं शुद्धान्नातिरिच्यते इतिन्यायेन विशिष्टाभावः शुद्धघटाभावस्वरूपोऽस्ति इति घटाभावस्य प्रतियोगी घटः घटाभावाभावश्च-घटाभावस्य तृतीयाभावरूपत्वात् इति घटरूपप्रतियोगिनः पर्वते ऽसत्वेपि पूर्वक्षणवृतित्वविशिष्टघटाभावाभावरूपप्रतियोगिनः सत्वेन नायं प्रतियोगिव्यधिकरणोऽभावः, एवं पटाभावादिरपीति प्रतियोगिव्यधिकरणाभावाप्रसिद्धिः ।

न च ज्ञानवान् द्रव्यत्वादित्यत्राव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणत्वं विवक्षितम् इति पूर्वक्षणवृत्तित्वविशिष्टघटाभावाभावरूपघटाभवप्रतियोगिनः स्वरूपेण पर्वते सत्वेपि साध्यतावच्छेदकसंयोगसम्बन्धेनाऽसत्त्वात् प्रतियोगिवैयधिकरण्य-

मक्षतम् इति न प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति वाच्यम् । एवमपि घटाभावे-यो वह्न्यभावः स घटाभावस्वरूपः अभावाधिकरणकाभावस्याधिकरणस्वरूपत्वात् इति घटाभावस्य प्रतियोगी वह्निरपि स च साध्यतावच्छेदकसंयोगसम्बन्धेन पर्वते वर्तते इति प्रतियोगिव्यधिकरणाभावाप्रसिद्धितादवस्थ्यात्। यदि च घटाभावे वह्न्यभावो भिन्न एव न घटभावस्वरूप इत्युच्यते तदा वह्निमान् धूमादित्यत्र लक्षसमन्वयसंभवेऽपि यत्र स्वरूपेण साध्यता ह्रदो धूमाभाववान् वह्न्यभावादिति तत्राऽव्याप्तिः ।

२६-१ तृतीये त्विति । तथा च घटाभावीययत्किञ्चित्प्रतियोगितावच्छेदकघटत्वाव-च्छिन्नानधिकरणत्वस्य हेत्वधिकरणे सत्वेन न प्रतियोगिव्यधिकरणाभावाप्रसिद्धिरिति न वह्निमान् धूमादित्यादावव्याप्तिसम्भव इति भावः ।

कपिसंयोगिभाववानिति। अयं भावः-कपिसयोगाभावाभावः कपिसंयोगः तत्र च गुणत्वं कपिसंयोगत्वं चेति धर्मद्वयं वर्तते इति कपिसंयोगाभावाभावप्रतियोगितावच्छेदकं गुण-सामान्याभावत्वं कपिसंयोगाभाववत्वं च भवितुमर्हति ततश्च यत्किञ्चित्प्रतियोगिताव-च्छेदकपदेन गुणसामान्याभावत्वं धृतं तदवच्छिन्नानधिकरणत्वमात्मान इति तन्निष्ठो-ऽभावः कपिसंयोगाभावाभावः तत्प्रतियोगितावच्छेदकं कपिसंयोगाभावत्वं तदेव साध्य-तावच्छेदकमित्यव्याप्तिरिति ।

२६-९ यादृशेति । तथा च प्रकृते हेत्वधिकरणस्यात्मनो यादृशप्रतियोगितावच्छेद-कगुणसामान्याभावत्वावच्छिन्नानधिकरणत्वं तादृशप्रतियोगितानवच्छेदकत्वं कपिसंयो-गाभावत्वस्य वर्तते एवेति नाव्याप्तिरिति ।

कालो घटवानिति । अयं भावः कालपरिमाणाधिकरणे महाकाले समवायसम्बन्धेन घटो नास्तीत्यभावो यद्यपि धर्तुं शक्यते तथापि सोऽभावः साध्यतावच्छेदककालिकसम्ब-न्धेम प्रतियोगिसमानाधिकरण एव जातः इति कालिकसम्बन्धेन काले वस्तुमात्रस्य सत्त्वेन अभावान्तरमपि प्रतियोगिसमानाधिकरणमिति प्रतियोगिव्यधिकरणाभावाप्र सिद्धिरिति ।

२६-११ अत्र केचिदिति । स्वरूपसम्बन्धेन महाकालभेदः भूतले वर्तते तत्रैव घटोऽपि वर्तत इति महाकालभेदविशिष्टो घटो जातः वैशिष्ट्यञ्च सामानाधिकरण्यसम्बन्धेन इतिम-हाकालभेदविशिष्टो घटो महाकाले न वर्तते तत्र स्वरूपसम्बन्धेन महाकालभेदाभावेन म हाकालभेदविशिष्टघटस्याभावादिति महाकालभेदविशिष्टघटभावः प्रतियोगिव्याधिकरणः तत्प्रतियोगितावच्छेदकं महाकालभेदविशिष्टघटत्वमनवच्छेदकं घटत्वं तदवच्छिन्नसामा-नाधिकरण्यं कालपरिमाणे इति समन्वयः ।

२६-१४ यद्वेति । पर्वतो वह्निमान् धूमादित्यादौ प्रतियोगितावच्छेदकसम्बन्धेन प्रतियो-ग्यनधिकरणीभूतहेत्वधिकरणवृत्तिरभावः संयोगेन घटो नास्तीतिप्रतीतिसाक्षिकः तदीयप्रति-योगितासामान्ये संयोगसम्बन्धावच्छिन्नत्व वह्नित्वावच्छिन्नत्वोभयाभावो वर्तते एकसत्त्वे द्वयं नास्तीति प्रतीतेः इति संयोगसम्बन्धेन वह्नित्वाच्छिन्नो धूमहेतोर्व्यापकः तत्सामा-नाधिकरण्यञ्च धूमे इति व्याप्तिलक्षणसमन्वयः । एवं कालो घटवान् कालपरिमाणदित्यत्र प्रतियोगितावच्छेदकसमवायसम्बन्धेन घटरूपप्रतियोग्यनधिकरणहेत्वधिकरणवृत्तिरभावः समवायेन घटो नास्तीति प्रतीतिसाक्षिकः तदीयप्रतियोगितायां कालिकसम्बन्धावच्छि-न्नत्व घटत्वावच्छिन्नत्वोभयाभावसत्त्वात् कालिकसम्बन्धेन घटत्वावच्छिन्नकालपरिमा-णरूपहेतोर्व्यापक इति तत्सामानाधिकरण्यं कालपरिमाणे इति व्याप्तिलक्षणसमन्वयः ।

२६–१९ यद्वेति । पर्वतो वह्निमान् धूमादित्यत्र हेतुर्धूमः तत्समानाधिकरणोऽन्योन्याभावः पर्वतो घटवान्नेत्याकारकः तत्प्रतियोगितावच्छेदको घटस्तद्भिन्नः साध्यो वह्निस्तद्वत्त्वावच्छिन्नः पर्वतस्तन्निरूपितवृत्तित्वं धूम इति लक्षणसमन्वयः ।

२६–२० अव्याप्यवृत्तित्वादिति । तथा च कपिसंयोगी एतद्वृक्षत्वादित्यत्र एतद्वृक्षत्वाधिकरणे वृक्षे कपिसंयोगरूपप्रतियोगितावच्छेदकस्य सत्त्वेन भेदस्य च प्रतियोगितावच्छेदकेन सह विरोधात् कपिसंयोगवान्नेति भेदस्य वक्तुमशक्यतया घटवान्नेत्यादिभेदमादाय लक्षणसमन्वयात् प्रतियोगिव्यधिकरणत्वनिवेशो न कर्तव्य इति भावः ।

नन्वेवंव्याप्तिलक्षणस्वीकारे धूमाधिकरणे पर्वते तद्वह्निमान्नेतिभेदस्य वक्तुं शक्यतया चालनीन्यायेन सर्व एव वह्निः प्रतियोगितावच्छेदक इत्यव्याप्तितादवस्थ्यमिति चेन्न यद्रूपविशिष्टसाध्यतावच्छेदकविशिष्टं साध्यं हेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकं तद्रूपविशिष्टसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति विवक्षणेन वह्नित्वविशिष्टवह्न्यवच्छिन्नान्योन्याभावस्य धूमवत्यसत्त्वेन दोषाभावात् ।

२६–२२ तस्याव्यव्याप्यवृत्तित्वादिति । तदा च प्रतियोगिनस्तादात्म्येन यःसम्बन्धो तद्भिन्नत्वरूपप्रतियोग्यसामानाधिकरण्यं विवक्षणीयम् । प्रतियोग्यवृत्तिर्हेतुसमानाधिकरणोऽन्योन्याभावो ग्राह्य इति यावत् । तावतापि अत्यन्ताभावघटितव्याप्तौ प्रतियोग्यसामानाधिकरण्यस्य निवेशेन तदपेक्षया अन्योन्याभावघटितव्याप्तौ प्रतियोग्यवृत्तित्वनिवेशेऽपि लाघवमिति भावः ।

२६–२३ किन्तु व्यापकसम्बन्धेति । तथा च शिरोमणिः 'एवं स्थिते सामानाधिकरण्यादौ सम्बन्धित्वं निवेशनीयं न त्वधिकरणत्वं तथा च धर्मिणोपि व्याप्यत्वं व्यापकत्वं च निर्वहति' इति तथा च येन सम्बन्धेन हेतुसाध्ययोः सहचारग्रहः तेन सम्बन्धेन व्याप्यव्यापकभावः तस्य सम्बन्धस्य वृत्तितानियामकत्वं नापेक्ष्यते अत एव अयं वृक्षः शिंशपाया इत्यादौ तादात्म्येन व्याप्यव्यापकग्रहः अन्यथा तादात्म्यस्य वृत्त्यनियामकतया स न स्यादिति ध्येयम् ।

२६–२६ न चैवमिति। एवं–अबाधितत्वासत्प्रतिपक्षितत्वपक्षसत्त्वसपक्षसत्त्वविपक्षावृत्तित्वरूपपञ्चरूपोपपन्नस्यैव हेतोरनुमापकत्वाङ्गीकारेण केवलान्वयिहेतोः विपक्षस्यैवाभावेन विपक्षावृत्तित्वरूपेण व्यतिरेकिणः पृथिवी इतरभिन्ना गन्धवत्त्वादित्यादेः पृथिवीमात्रस्यैव पक्षतया सपक्षाभावेन सपक्षसत्त्वरूपेण उपपन्नत्वाभावेन तयोरनुमापकत्वासम्भवेन अन्वय्यनुमानस्यैव स्वीकारे इत्यर्थः । इदं च साध्यवदन्यावृत्तित्वरूपव्याप्तिनिरूपणप्रस्तावे 'एवं च केवलान्वयिव्यतिरेक्यनुमानमेव नेति ग्रन्थेन २४ पृष्ठे भाट्टचिन्तामणावुक्तम् तदेव एवंपदेनात्र परामृष्टम् ।

व्यतिरेकव्याप्ताविति–साध्याभावव्यापकीभूताभावप्रतियोगित्वं व्यतिरेकव्याप्तिः अनुमानत्रैविध्यम्–केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदादितिशेषः ।

२२–२९ व्यभिचारधीति । व्यभिचारधीविरोधित्वं साध्यवदन्यावृत्तित्वरूपहेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिज्ञानयोरिव साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्याप्तिज्ञानस्यापि इति तद्विषयो धर्मः व्याप्तिः तद्विशिष्टो हेतुतावच्छेदको धर्मो धूमत्वादिस्तत्प्रकारकं पक्षधर्मताज्ञानं धूमवान् पर्वत इत्याकारकं तदनुमितिहेतुरित्यर्थः । वैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन ।

२६–३१ अविवक्षित इति । पञ्चरूपेषु यावन्ति रूपाणि सम्भवन्ति तदुपपन्नत्वमात्रे

तु विवक्षितम्। तेन केवलान्वयिव्यतिरेकिणोः पञ्चरूपोपपन्नत्वाभावेऽपि न क्षतिरिति भावः। तदुक्तं मथुरानाथतर्कवागीशेन 'यत्र यावतां रूपाणां प्रसिद्धिसम्भवस्तावतामेवा-वश्यकत्वं यत्र विपक्षः सपक्षो वा न प्रसिध्यति तत्र विपक्षावृत्तित्वसपक्षवृत्तित्वज्ञानयो-रनुपयुक्तत्वमेव' इत्यर्थकेन ग्रन्थेन।

२६-३२ व्यभिचाराग्रह इति। व्यभिचारग्रहस्य व्याप्तिग्रहप्रतिबन्धकतया तदभावः व्याप्तिग्रहे कारणम्। कारणीभूताभावप्रतियोगिन एव प्रतिबन्धकपदार्थत्वात्। एवम-न्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुत्वमिति भावः।

२७-२तर्क इति। तर्कयामि इत्यनुभवसिद्धो मानसत्वव्याप्यो जातिविशेषस्तर्कत्वम्। निवर्तते इति। यदि धूमो वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यात् इति ज्ञानेन व्यभि-शङ्का निवर्तते। ननु धूमो न वह्निजन्यः किन्त्वहेतुक एवेति यदि शङ्का भवेत् तदा कार्यकारणभावप्रतिसंधानाभावात् कथं व्यभिचारशङ्कानिवृत्तिरित्याह-तत्रापीति। परिहरति धूमार्थमिति।

ननु तर्कं प्रति आपाद्यव्याप्यापादकवत्ताज्ञानं कारणं तत्र व्याप्तिग्रहप्रतिबन्धकव्यभि-चारग्रहशङ्कानिवर्तकस्तर्कोऽपेक्षित एवमग्रेऽपीत्यनवस्था स्यादत आह-यत्रेति। स्वत एव-शङ्कासामग्रीविरहादेव। न तर्कापेक्षेत्यनन्तरमतो नानवस्थेति शेषः।

ननु तर्कस्य न व्यभिचारशङ्कानिवर्तकत्वं तर्ककारणीभूतव्याप्तिज्ञानेनैव तन्निरासा-दिति चेदत्र केचित्-अनाहार्यशङ्कानिवर्तकत्वस्य तर्ककारणीभूतव्याप्तिज्ञानसाध्यत्वेऽपि आहार्यशङ्कानिवर्तनाय तर्कस्यापेक्षणात् आहार्यज्ञानस्य व्याप्तिज्ञानाप्रतिबध्यत्वात् अनिष्टप्रसञ्जनात्मकतर्केण तु आपादकज्ञाने आपाद्यज्ञानरूपानिष्टसाधनत्वज्ञानजननद्वारा आपादकज्ञाने द्वेषो जन्यते तेन च आपद्यज्ञाने इच्छाप्रतिबन्धः क्रियते। एवं च इच्छारूप-कारणाभावादेव नाहार्यशङ्कोत्पत्तिरिति अर्थसिद्धं तर्कस्य निवर्तकत्वम्।

२७-८ तदनङ्गीकारेत्विति। साध्यतावच्छेदकरूपेणैकव्यक्तिज्ञानादेव पक्षधर्मतावला-त्तादूरूप्येण साध्यान्तरानुमितिसंभवेन सामान्यलक्षणानङ्गीकार इत्यर्थः।

२७-१० व्याप्तिग्रहप्रतिबन्ध इति। उपाधिव्यभिचारेण साधने साध्यव्यभिचारा नुमानाद्व्याप्तिग्रहप्रतिबन्ध इत्यर्थः। अनुमानं च वह्निर्धूमव्यभिचारी धूमव्यापकार्द्रेन्धन-संयोगव्यभिचारित्वादिति। व्यापकव्यभिचारिणो व्याप्यव्यभिचारस्यावश्यकत्वात्।

साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिः, धूमवान् वह्नेरित्यत्र साध्यस्य धूमस्य व्यापकः साधनस्य वह्नेरव्यापकश्च आर्द्रेन्धनसंयोग इति सोपाधिकत्वाद्वह्निरूपो हेतुर्व्याप्यत्वासिद्धः। नन्वेवमुपाधिलक्षणस्वीकारे स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वमुपाधिर्न स्यात् श्यामत्वस्य घटादावपि सत्वेन शाकपाकजत्वस्य तत्रा-भावेन साध्यव्यापकत्वाभावादत आह-यद्धर्मावच्छिन्नेति। तथा च मित्रातनयत्वाव-च्छिन्नश्यामत्वव्यापकत्वस्य मित्रातनयत्वाव्यापकत्वस्य च शाकपाकजत्व सत्त्वा-दुपाधित्वमिमि।

२७-१७ एवं यत्र तादृश इति। वायुः प्रत्यक्षो द्रव्यत्वादित्यत्र प्रत्यक्षत्वरूपसा-ध्याधिकरणं घटः प्रत्यक्षत्वरूपसाध्यानाधिकरणं परमाणुः एतदन्यतरत्वरूपावच्छिन्नप्रत्य-क्षत्वव्यापकत्वस्य उद्भूतरूपे सत्त्वात् उद्भूतरूपमुपाधिः।

वस्तुतस्तु उपाध्यधिकरणं यत्साध्याधिकरणं यच्चोपाधिशून्य साध्यव्यभिचाराधि-करणं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वमुपाधेः सम्भवतीतिबोध्यम्। धूम-

वान्वह्नेरित्यत्रार्द्रेन्धनसंयोग उपाधिः उपाधेरार्द्रेन्धनसंयोगस्य साध्यस्य धूमस्य चाधिकरणं महानसादिकमुपाधिनार्द्रेन्धनसंयोगेन शून्यं व्यभिचारनिरूपकाधिकरणं चायोगोलकं तदन्यतरत्वावच्छिन्नस्य साध्यस्य व्यापकत्वं वह्निरूपसाधनाव्यापकत्वं चार्द्रेन्धनसंयोगस्येति समन्वयः। यथाश्रुतं तु न युक्तम् प्रत्यक्षत्वाधिकरणमात्मा प्रत्यक्षत्वानधिकरणं गगनं तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वस्य उद्भूतरूपेऽसत्त्वादुद्भूतरूपस्य वायुः प्रत्यक्षो द्रव्यत्वादित्यत्रोपाधित्वानापत्तेः मम तु उपाधेरुद्भूतरूपस्य साध्यस्य प्रत्यक्षत्वस्य चाधिकरणं घटः उद्भूतरूपशून्यम् प्रत्यक्षत्वव्यभिचाराधिकरणं च गगनादिकं तदन्यतरत्वावच्छिन्नसाध्यव्यापकत्वमुद्भूतरूपे आत्मा तु यद्यपि साध्याधिकरणं परन्तु नोपाध्यधिकरणमिति तन्नान्यतरत्वेन गृह्यते इति न दोषः।

२७–२० वह्नीतरत्वमुपाधिरिति। अनुष्णत्वरूपसाध्यस्य व्यापकं वह्नावपि कृतकत्वस्य सत्त्वेन तदव्यापकं च वह्नीतरत्वमिति भवति तस्योपाधित्वम्। पर्वतेतरत्वं तु नोपाधिः तत्र वह्निव्यापकत्वग्राहकमानस्याभावादिति ध्येयम्।

बाधोन्नीतः बाधेन पक्षे साध्याभाववत्तया उन्नीतः निश्चित इत्यर्थः।

२७–२४ अन्ये त्विति। अयोगोलकं धूमवत् वह्नेरित्यस्य अयोगोलकं धूमाभाववदार्द्रेन्धनसंयोगाभावादित्यनेन सत्प्रतिपक्षितत्वमिति भावः। तदुक्तं तत्त्वचिन्तामणौ— 'केचित्तु साधनव्यापकोऽप्युपाधिः क्वचिद्यत्र पक्षावृत्तिर्हेतुः, यथा करका पृथिवी कठिनसंयोगादित्यत्रानुष्णाशीतस्पर्शवत्त्वम्, न च तत्र स्वरूपासिद्धिरेव दोषः, सर्वत्रोपाधेर्दूषणान्तरसंकरादित्याहुः' इति।

२७–२८ पक्षत्वं चेति। अनुमित्साविरहविशिष्टसिद्ध्यभावः पक्षता। तत्र विशिष्टाभावस्त्रिधा विशेषणाभावप्रयोज्यः विशेष्याभावप्रयोज्यः उभयाभावप्रयोज्यश्चेति–तद्यथा–अयोध्यास्थे ब्राह्मणे काशीस्थत्वरूपविशेषणाभावप्रयोज्यः काशीस्थत्वविशिष्टब्राह्मणत्वाभावः, काशीस्थे शूद्रे काशीस्थत्वरूपविशेषणसत्त्वेऽपि ब्राह्मणत्वरूपविशेष्याभावप्रयुक्तो विशिष्टाभावः अयोध्यास्थे शूद्रे काशीस्थत्वरूपविशेषणस्य ब्राह्मणत्वरूपविशेष्यस्य चाभावादुभयाभावप्रयुक्तो विशिष्टाभावः, एवं प्रकृते यत्र अनुमित्सासिद्धी तत्र सिद्धिरूपविशेष्यस्य सत्त्वेऽपि अनुमित्साविरहरूपविशेषणस्याभावाद्विशेषणाभावप्रयुक्तो विशिष्टाभावः, यत्र अनुमित्सा नास्ति सिद्धिश्च नास्ति तत्र अनुमित्साविरहरूपविशेषणस्य सत्त्वेऽपि सिद्धिरूपविशेष्यस्याभावात् विशेष्याभावप्रयुक्तो विशिष्टाभावः, यत्र अनुमित्साऽस्ति सिद्धिश्च नास्ति तत्र सिद्धिरूपविशेष्यस्य अनुमित्साविरहरूपविशेषणस्य चाभावादुभयाभावप्रयुक्तो विशिष्टाभावः इति त्रिषु स्थलेषु अनुमितिर्भवति। यत्र च अनुमित्सा नास्ति सिद्धिश्चास्ति तत्र अनुमित्साविरहविशिष्टसिद्धेः सत्त्वात अनुमित्साविरहविशिष्टसिद्ध्यभावरूपपक्षताया असत्त्वेन नानुमितिरिति।

अनुमित्साविरहवैशिष्ट्यञ्च सिद्धौ एककालावच्छेदेन एकशरीरावच्छेदेन एकात्मवृत्तित्वं तेन अनुमित्साकालीनसिद्धेः कालिकसम्बन्धेन अनुमित्साविरहविशिष्टत्वेन घटावच्छेदेनैकस्मिन्नात्मनि अनुमित्साविरहविशिष्टत्वेन वा नानुमितिक्षतिः एककालीनैकशरीरावच्छेदेन एकात्मवृत्तित्वस्य अभावात्।

अयमत्र निष्कर्षः 'पर्वतो वह्निमानिति' निश्चयः सिद्धिरित्युच्यते सा च 'पर्वतो वह्निमानि' त्यनुमितौ प्रतिबन्धिका। प्रतिबन्धकत्वं च कारणीभूताभावप्रतियोगित्वम् प्रकृते च सिद्ध्यभावस्य अनुमितिं प्रति कारणत्वात् तत्प्रतियोगित्वं सिद्धाविति भवति तस्याः

प्रतिबन्धकत्वम्। परन्तु सिद्धिसत्त्वे पर्वते वह्न्यनुमितिर्मे जायतामितीच्छा अनुमित्सा तस्यां सत्याम् अनुमितिर्जायते इति अनुमित्साया उत्तेजकत्वम्, उत्तेजकत्वं च प्रतिब न्धकसमानकालीनकार्यजनकत्वम्। एवं च अनुमित्साविरहविशिष्टसिद्धिरनुमितेः प्रतिबन्धिका तदभावश्च पक्षता सा च अनुमितौ कारणम्।

ननु यत्र प्रथमं परामर्शः तद् द्वितीयक्षणे सिद्धिः सिद्ध्युत्पत्तिद्वितीयक्षणे अनुमित्सा तत्र अनुमित्साकाले परामर्शस्य नाशात् नानुमितिः यत्र च क्रमेण अनुमित्सासिद्धिपरामर्शाः तत्र परामर्शकाले अनुमित्साया नष्टत्वादुत्तेजकाभावेन प्रतिबन्धकसद्भावान्नानुमितिः, यत्र च क्रमेण सिद्धिपरामर्शानुमित्साः तत्र अनुमित्साकाले सिद्धेर्नाशेन प्रतिबन्धकाभावादेवानुमितिः, यत्र च परामर्शानुमित्सासिद्धयस्तत्र परामर्शनाशादेव नानुमितिः यत्र च अनुमित्सापरामर्शसिद्धयस्तत्र उत्तेजकाभावात्प्रतिबन्धकसद्भावाच्च नानुमितिः, यत्र च सिद्ध्यनुमित्सापरामर्शास्तत्र प्रतिबन्धकाभावादेवानुमितिः, इति सिद्धिकाले परामर्शकाले वा न अनुमित्सा इति अनुमित्साविरहविशिष्टत्वं सिद्धेर्विशेषणं व्यर्थमिति चेन्न यत्र वह्निव्याप्यधूमवान्पर्वतो वह्निमान् अनुमितिरिष्टसाधनम् इतिसमूहालम्बनात्मकं ज्ञानम् तत अनुमित्सा तत्रानुमित्सापरामर्शसिद्धीनां साहित्यादनुमित्यर्थं पक्षतासम्पत्तये तद्विशेषणस्यावश्यकत्वात्।

२७-३० ननु सिद्धिपरामर्शसत्त्वेऽपि एतदुत्तरकालीनं यत्किञ्चिज्ज्ञानं मे जायतामितीच्छाया अप्यनुमित्सात्वेन तत्सत्त्वे अनुमित्यापत्तिः-नच अनुमितित्वप्रकारिकैवेच्छा अनुमित्सा तथा च एतदुत्तरकालीनं यत्किचिज्ज्ञानं जायतामितिच्छाया नानुमित्सात्वमिति न दोष इति वाच्यम् तथा सति प्रत्यक्षभिन्नं ज्ञानं जायतामितीच्छाया इष्टस्यानुमित्सात्वस्यानापत्तेः इत्यत आह अनुमित्सेति।

२८-३०परामर्शश्चेति। अयम्भावः द्विविधादपि परामर्शात्पक्षः साध्यवान् इत्येवमाकारानुमितिस्वीकारे यदा व्याप्यप्रकारकपक्षविशेष्यकपरामर्शादनुमितिर्जाता तदा पक्षप्रकारकव्याप्यविशेष्यकः परामर्शो नास्ति यदा च पक्षप्रकारकव्याप्यविशेष्यकपरामर्शादनुमितिर्जाता तदा व्याप्यप्रकारकपक्षविशेष्यकः परामर्शो नास्तीति कारणाभावे कार्योत्पादरूपव्यतिरेकव्यभिचारसत्त्वात कस्यापि परामर्शस्य कारणत्वन्न स्यात् अतः पक्षो व्याप्यवान् इत्याकारकपक्षविशेष्यकपरामर्शात् पक्षविशेष्यिका पक्षः साध्यवानित्याकारिका पक्षे व्याप्य इति व्याप्यविशेष्यकपरामर्शात् साध्यविशेष्यिका पक्षे साध्यम् इत्याकरिकानुमितिः स्वीक्रियते एवं च एकधर्मावच्छिन्नकार्यं प्रति यदानेकधर्मावच्छिन्नस्य कारणता तदा व्यतिरेकव्यभिचारः प्रकृते च साध्यप्रकारकपक्षविशेष्यकानुमितित्वावच्छिन्नं प्रति व्याप्यप्रकारकपक्षविशेष्यकपरामर्शत्वावच्छिन्नस्य पक्षप्रकारकसाध्यविशेष्यकानुमिति त्वावच्छिन्नं प्रति च पक्षप्रकारकव्याप्यविशेष्यकपरामर्शत्वावच्छिन्नस्य कारणतया एकधर्मावच्छिन्नं कार्यं प्रति अनेकधर्मावच्छिन्नस्य कारणस्याभावान्न व्यतिरेकव्यभिचारः।

एतदुक्तं भवति वह्निव्याप्यधूमवान् पर्वतः इतिपरामर्शात् पर्वतो वह्निमान् इत्याकारानुमितिः पर्वते वह्निव्याप्यो धूमः इतिपरामर्शात् पर्वते वह्निः इत्याकारानुमितिर्जायते इति।

ननु व्याप्यप्रकारकपक्षविशेष्यकपक्षप्रकारकव्याप्यविशेष्यकान्यतरपरामर्शत्वेन पक्षः साध्यवानित्याकारानुमितिं प्रति कारणतास्वीकारेण अन्यतरपरामर्शत्वावच्छिन्नकारणत्वस्य सत्त्वान्न व्यतिरेकव्यभिचारः कारणतावच्छेदकावच्छिन्नप्रतियोगिताककरणाभावे कार्यताव

च्छेदकावच्छिन्नोत्पादस्यैव व्यतिरेकव्यभिचाररूपत्वादिति चेन्न–तद्भिन्नत्वे सति तद्भेद्वान् यः तत्प्रतियोगिकभेदवत्त्वमन्यतरत्वम् यथा घटभिन्नत्वे सति पटभेदवद् एतादृयातिरिक्तं जगन्मात्रं तद्भिन्नत्वमेतद्द्वये इति इदमेव घटपटान्यतरत्वं नाम एवं पक्षविशेष्यकपरामर्शभिन्नत्वे सति व्याप्यविशेष्यकपरामर्शभिन्नं एतद्द्वयातिरिक्तं जगन्मात्रं तद्भिन्नत्वं द्विविधपरामर्शे इति पक्षविशेष्यकव्याप्यविशेष्यकपरामर्शान्यतरत्वमिति एवं चान्यतरत्वरूपकारणतावच्छेदककुक्षौ जगतः प्रवेशेन विशेष्यविशेष्यणाभावव्यत्यासेन व्याप्यविशेष्यकपरामर्शभिन्नत्वे सति पक्षविशेष्यकपरामर्शभिन्नो यस्तद्भिन्नत्वरूपस्य पक्षविशेष्यकपरामर्शभिन्नत्वे सति व्याप्यविशेष्यकपरामर्शभिन्नो यः तत्प्रतियोगिकभेदवत्त्वरूपस्य च अन्यतरत्वस्य विनिगमनाविरहेण कारणतावच्छेदकत्वेन गौरवेण अन्यतरत्वेन कारणतायाः स्वीकर्तुमयोग्यत्वात् ।

२८–३२ उभयविधेति । ननु द्विविधादपि परामर्शादेकविधानुमितिस्वीकारे व्यतिरेकव्यभिचार इति चेन्न व्याप्यप्रकारकपक्षविशेष्यकपरामर्शाव्यवहितोत्तरक्षणजायमानपक्षः साध्यवानित्याकारकानुमितित्वावच्छिन्नं प्रति व्याप्यप्रकारकपक्षविशेष्यकपरामर्शस्य कारणता एवं पक्षप्रकारकव्याप्यविशेष्यकपरामर्शाव्यवहितोत्तरक्षणजायमान पक्षः साध्यवान् इत्याकारकानुमितित्वावच्छिन्नं प्रति पक्षप्रकारकव्याप्यविशेष्यकपरामर्शस्य कारणता इति स्वीकारेण व्यतिरेकव्यभिचाराभावात् ।

वस्तुतस्तु एतदपेक्षयापि लाघवात् पक्षनिष्ठविषयतानिरूपितव्याप्यनिष्ठविषयताकपरामर्शत्वेन द्विविधपरामर्शस्य पक्षः साध्यवान् इत्याकारानुमितिं प्रति कारणतास्वीकाराद् व्यतिरेकव्यभिचारवारणं बोध्यम् द्विविधपरामर्शात् पक्षविशेष्यकसाध्यविशेष्यकानुमितिद्वयस्वीकारस्तु नोचितः अनुभवविरोधादिति ।

केचित्तु अनुभवानुरोधेन पक्षविशेष्यकादेव परामर्शादनुमितिर्जायते न तु व्याप्यविशेष्यकात् अत एव वह्निव्याप्यधूमवांश्चायमित्याकारकः पक्षविशेष्यक एवोपनय इतिवदन्ति।

२९–१ तृतीयक्षणसाधारणमव्यवहितोत्तरत्वमाह–अव्यवहितोत्तरत्वं चेति ।

२९–६ संकर इति। चाक्षुषत्वाभाववति शाब्दादिपरामर्शे परामर्शत्वं परामर्शत्वाभाववति घटविषयकचक्षुषे चाक्षुषत्व चाक्षुषपरामर्शे चाक्षुषत्वं परामर्शत्वं चेति संकर इत्यर्थः

२९–८ व्यभिचारवारणस्येति । मानसपरामर्शस्यैवानुमितिकारणत्वे यत्र चाक्षुषपरामर्शादनुमितिस्तत्र व्यभिचारः तद्वारणाय चाक्षुषपरामर्शानन्तरं मानसपरामर्शं कल्पयित्वाऽनुमितिस्वीकारेण व्यभिचाराभाव इत्यर्थः ।

२९–१० चक्षुर्योगाभावेनेति । मनस इति शेषः । तथा च चाक्षुषसामग्र्यन्तर्गतस्य मनश्चक्षुः संयोगस्याभावादेव न चाक्षुषमिति भावः ।

३०–९ व्याप्त्यंशे निश्चयत्वानिवेशेनेति । विशिष्टवैशिष्ट्यबुद्धौ विशेषणांशे संशयानङ्गीकारेणेत्यर्थः ।

अयं भावः—विशिष्टवैशिष्ट्यबुद्धौ विशेषणतावच्छेदकप्रकारकनिश्चयः कारणम् अत एव रक्तो दण्डो नवेति संशयात् न रक्तदण्डवानयमिति ज्ञानस्योदयः । एवं च प्रकृते वह्निव्याप्यो धूमो नवेति संशयकाले वह्निव्याप्यधूमवानय पर्वत इति ज्ञानानुदयात्तस्यैव चानुमितिकारणत्वात् व्याप्त्यंशे निश्चयत्वनिवेशो विफल इति ।

३०–१२ बाधकाभाव इति । दण्डी रक्तो नवेति संशयानन्तरं रक्तदण्डवानिति संशयस्योत्पदाद्विशेषणांशे संशयानभ्युपगमपक्षस्य निर्युक्तिकत्वादिति भावः ।

३०-२० केचिदिति। उदयनाचार्याः इत्यर्थः। तथा च 'यदनुमेयेन सम्बद्धं प्रसिद्धं च तदन्विते। तदभावे च नास्त्येव तल्लिङ्गमनुमापकम्।' इति प्रशस्तपादभाष्यमुपादाय लिङ्गमनुमापकमिति यल्लिङ्गं प्रमाणमनुमापकम् अनुमितिरूपप्रमाकरणम् एतेन परामृश्यमानं लिङ्गमनुमापकम् तथा च लिङ्गस्यावान्तरव्यापारवत्त्वेन करणत्वमिति संगच्छत इति भावः इति किरणावली। भाविभूतलिङ्गस्थले च लिङ्गस्याभावेऽपि ज्ञानरूपव्यापारद्वाराऽनुमितिः अतः एव धूमादिति हेतुपञ्चम्युपपत्तिरिति तेषामाशयः।

३०-२१भूतभाविलिङ्गास्यामिति। 'लिङ्गदर्शनात्संजायमानं लैङ्गिकम्' इति यथाश्रुत प्रशस्तपादभाष्यानुसारिणः। अस्मिन्मते धूमादित्यत्र धूमपदं धूमज्ञाने लाक्षणिकम्। तात्पर्यटीकायां अनुमानादीनि तु स्वज्ञानेन प्रमासाधनानि न खल्वगृहीतं लिङ्गं शब्दो वाऽऽगमसहितं सादृश्यं वा यथाविषयमादधाति प्रमाम् इत्युक्तमतो धूमादेरेव ज्ञानद्वारानुमिति करणत्वं यद्यपि प्रतीयते तथापि 'अपरे तु मन्यन्ते लिङ्गपरामर्शोऽनुमानम् वयं तु पश्यामः सर्वमनुमानमनुमितेस्तत्रान्तरीयकत्वात् प्रधानोपसर्जनताविवक्षायां लिङ्गपरामर्श इति न्याय्यम् इति वार्तिकात् लिङ्गपरामर्शस्यैवानुमितिकारणता सिध्यतीति भावः।

३०-२७प्रतिज्ञात्वमिति। अस्मिंल्लक्षणे न्यायान्तर्गतत्वे सतीति देयम् तेनोदासीन वाक्ये नातिव्याप्तिः।

३१-२ तथा चायामिति। वह्निव्याप्यधूमवाँश्चायमित्यर्थः।

३१-४ निगमनत्वमिति। तस्मात्तथा इति निगमनम्। धूमज्ञानज्ञाप्यवह्निमान् पर्वत इति बोधः अयमिति पदस्यानुषङ्गात्।

३१-१७ दिगिति। 'पञ्चावयववाक्यस्य गुणदोषविभागवित्' इति महाभारत दर्शनेन पञ्चावयवानां श्रौतत्वमवगम्यते।

अनुमितिकरणेति। अनुमितिपदम् साध्यव्याप्यहेतुमान् पक्षः साध्यवान् इति समूहालम्बनानुमितिपरम्। तथा च ह्रदो वह्निमान् धूमादित्यत्र वह्निमान् ह्रद इत्यनुमितिकारणीभूतोऽभावः वह्न्यभाववान् ह्रद इति बाधाभावः तत्प्रतियोगी वह्न्यभाववद्ध्रदः तत्प्रकारकं यथार्थज्ञानं ह्रदे वह्निसाधने धूमो बाधित इति तत्प्रकारो वह्न्यभाववद्ध्रदः स च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन धूमनिष्ठ इति भवति तस्य दोषत्वम्।

३१-१८ एतदुक्तं भवति अनुमितिकारणीभूताभावप्रतियोगिनो ये (व्यभिचारादयः) तत्प्रकारकयथार्थज्ञानविषयत्वम् हेत्वाभासत्वं (दुष्टहेतुत्वम्) हेतुवदाभासन्त इति व्युत्पत्त्या हेत्वाभासपदं दुष्टहेतुपरम्। हेतोराभासा इति व्युत्पत्त्या च हेतुदोषपरम्। इदं लक्षणं, च ज्ञायमानानां बाधादिदोषाणां प्रतिबन्धकत्वमभ्युपेत्य बाधादिज्ञानस्यानुमितिप्रतिबन्धकत्वे तु न बाधादयोऽनुमितिकारणीभूतप्रतियोगिनः किन्तु बाधनिश्चयः तदा च अनुमिति कारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम् हेत्वाभासलक्षणं बोध्यम्। अनुमितिकारणीभूतो ऽभावः वह्न्यभाववान् ह्रद इति बाधज्ञानाभावः तत्प्रतियोगियथार्थज्ञानं वह्न्यभाववान् ह्रद इत्याकारकं तद्विषयत्वं वह्न्यभाववद्ध्रदे इति तस्य हेतुदोषत्वम् तद्वत्त्वं च दुष्टहेतुनां लक्षणम् इति।

३१—२१ यादृशविशिष्टविषयकत्वेनेति। तृतीयार्थोऽनतिरिक्तवृत्तित्वरूपमवच्छेदकत्वम् यादृशविशिष्टविषयकत्वं च यद्रूपावच्छिन्नविषयकत्वम् ज्ञानपदमनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयपरम् षष्ठ्या निष्ठत्वमर्थः। तत्त्वमित्यस्य तद्रूपवत्त्वमित्यर्थः। तथा च अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयद्रूपावच्छिन्नविषय-

कत्वावच्छिन्ना प्रकृतानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकता तद्रूपवत्त्वं हेत्वाभासत्वम्, ह्रदो वह्निमान् धूमादित्यनुमितौ वह्न्यभाववान् ह्रद इति बाधनिश्चयः प्रतिबन्धकः तथा च प्रकृतानुमितिः ह्रदो वह्निमान् इत्याकारिका सा च प्रतिबध्या इति प्रतिबध्यता तन्निष्ठा तन्निरूपिता प्रतिबन्धकता वह्न्यभाववान् ह्रद इति आनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चये तत्र वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयकत्वं वर्तते इति प्रतिबन्धकता वह्न्यभावद्ध्रदविषयकत्वावच्छिन्ना तद्रूपवान् वह्न्यभाववद्ध्रदः इति तस्य दोषत्वम् एवं पर्वतो धूमवान् वह्नेरित्यत्र धूमाभाववद्वृत्तिवह्नेर्दोषत्वम् तथा हि हेत्वाभासलक्षणे अनुमितिपदं साध्यव्याप्यहेतुमान् पक्षः साध्यवानिति समूहालम्बनानुमिति परम् इति तादृशानुमितिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकता धूमाभाववद्वृत्तिर्वह्निरितिनिश्चये तदवच्छेदकं धूमाभाववद्वृत्तिवह्नित्वावच्छिन्नविषयकत्वमिति धूमाभाववद्वृत्तिवह्निर्व्यभिचारदोष इति समन्वयः।

३१—२९ साक्षात्प्रतिबन्धकत्वाभावेनेति। उपाधिर्हि स्वव्यभिचारेण हेतौ साध्यव्यभिचारानुमापक इति साध्यव्यभिचारद्वाराऽनुमितिदूषकः न साक्षात् व्यभिचारादयस्तु व्याप्तिज्ञानविघटनद्वारा व्याप्तिविषयकसमूहालम्बनानुमितेः साक्षादेव दूषका इति भावः।

३२—४ दूषकताबीजमिति। अनुकूलतर्काभावेन अनेन हेतुना यथा साध्यं साध्यते तथैव साध्याभावोऽपि साधयितुं शक्य इति दूषकत्वमस्येत्यर्थः।

३२—९ मूर्त्तत्वादितीति। पृथिव्यप्तेजोवायुमनांसि मूर्तानीति तत्र मूर्तत्वं वायौ वर्तते आकाशे च नेति पक्षैकदेशे आकाशे हेतोरवृत्तित्वमित्यर्थः।

३२—१२ अक्षपादीया इति। अत्रारुचिबीजं तु नीलधूमे व्याप्तेः सत्त्वेन व्याप्यत्वासिद्धेरसम्भव एव बोध्यम्।

न च तत्र व्याप्तिसत्त्वेऽपि नीलधूमत्वस्यानवच्छेदकतया तदवच्छेदेन व्याप्यत्वासिद्धिरेवेति वाच्यम् अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वस्य नीलधूमत्वेऽपि सत्त्वात्।

न च स्वरूपसम्बन्धरूपावच्छेदकत्वस्य सम्भवति लघौ गुरौ तदभावादिति न्यायेन गुरुणि नीलधूमत्वेऽभावाद्व्याप्यत्वासिद्धिरिति वाच्यम् तथा सति 'पशुमान् सास्नादिमतः' इत्यत्रापि व्याप्यत्वासिद्ध्यापत्तेः सास्नापेक्षया गोत्वस्य लघुत्वेन स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात्। तस्माद्व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिर्हेत्वाभासः किन्त्वधिकोक्तिरूपनिग्रहस्थानेन पुरुषो निगृह्यते इति भावः।

३२—१४ आद्यमुदाहरति—यथा नित्यः शब्द इति। द्वितीयमुदाहरति एवं वायुरप्रत्यक्ष इति।

३२—२० अत्राहुरिति। रत्नकोषकारा इति शेषः। सत्प्रतिपक्षस्य संशयजनकत्वं दूषकताबीजं न त्वनुमितिप्रतिबन्धकत्वं तदभावव्याप्यवत्ताज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावादिति तेषामाकूतम्।

अत्रेदमवधेयम्—घटाभावव्याप्यवत्ताज्ञानेऽपि घटचक्षुः संयोगे सति घटवत्ताज्ञानं जायते एवं शङ्खे पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सत्यपि पित्तादिदोषे सति पीतः शङ्ख इति ज्ञानं जायते तदभावव्याप्यवत्ताज्ञाने सति तद्वत्ताविषयकः शाब्दबोधः ज्ञानलक्षणाधीनं चाक्षुषं तु न जायतेऽतस्तद्वत्ताविषयकं शाब्दं ज्ञानलक्षणाजन्यज्ञानं च प्रति तदभावव्याप्यवत्ताज्ञानं प्रतिबन्धकं न तु तद्वत्ताविषयकज्ञानमात्रं प्रतीत्यङ्गीकर्तव्यम् तथा सति पूर्वोदीरितयोः घटवत्ताज्ञानपीतः शङ्ख इति ज्ञानयोरनापत्तेः एवञ्च

यथा कोटिद्वयव्याप्यवत्ताज्ञाने सति उभयभासकसामग्रीसत्त्वात् कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति तथा सत्प्रतिपक्षस्थलेऽपि संशयरूपोनुमितिर्भवत्येव ।

न च यद्युभयभासकसामग्रीसत्त्वे उभयभानं तदा पित्तादिदोषसत्त्वेऽपि पीतत्वशुक्लत्वोभयस्मृतावुभयोर्भानापत्तिरिति वाच्यम् तत्र पीतत्वसाक्षात्कारस्यैवानुभविकत्वेन पीतत्वाभावग्रहे पित्तरूपदोषस्य प्रतिबन्धकत्वमभ्युपगम्य पीतत्वसाक्षात्कारसामग्र्या अधिकबलवत्त्वं दूरत्वदोषे च स्थाणुत्वपुरुषत्वयोः स्मृतौ संशयस्यैवोदयात् उभयसामग्र्योः समबलत्वं कल्प्यत इत्यदोषात् ।

ननु पूर्वोक्तरीत्या तद्वत्तानुमितौ तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावेन परस्परानुमितिप्रतिबन्धः सत्प्रतिपक्षस्थले यद्यपि न सम्भवति तथापि निश्चयोत्पादने क्लृप्तशक्तिकयोस्तद्व्याप्यवत्तातदभावव्याप्यवत्ताज्ञानयोर्मिलितयोः साध्यसंशयहेतुत्वं कल्पनीयमिति गौरवमिति चेन्न—तत्तत्परामर्शस्य तत्तद्विधेयकानुमितित्वमेव कार्यतावच्छेदकं न तु निश्चयत्वमपि तद्घटकं किन्तु एकैकपरामर्शसत्त्वे कोट्यन्तरभासकसामग्र्यभावात् निश्चयात्मिकाऽनुमितिर्भवति उभयपरामर्शसत्त्वे च कारणबलादुभयकोट्योर्विरोधितया भानेऽर्थात्संशयरूपानुमितिर्भवतीति अधिककार्यकारणभावकल्पनाभावेन गौरवाभावादिति ।

३२—२४ अत्र नव्या इति । लाघवेन लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताज्ञानं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वमभ्युपगम्यते न तु ज्ञानलक्षणासन्निकर्षजन्ये शाब्दबोधे च पृथक् प्रतिबन्धकता गौरवात् तथा च प्रतिबन्धकसत्त्वान्नानुमितिः न हि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव प्रत्यक्षस्थले संशयाकारानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वमपि प्रतिबन्ध्यतावच्छेदककोटौ दीयेतेति भावः ।

३२—३० धर्मनिरूपणपरमीमांसाशास्त्रे अनुमाननिरूपणं काकदन्तपरीक्षावान्निष्फलमित्याशङ्कां निरस्यति—तदिदमनुमानमित्यादिना । एवं च चोदनैव प्रमाणमिति नियमोपयोगि तन्निरूपणमित्याशयः ।

३२—२२ सिद्धसाधनभियेति । क्षितिः सकर्तृका कार्यत्वादित्यनुमानेन पक्षतावच्छेदकक्षितित्वावच्छेदेन सकर्तृकत्वसाधने परमाणौ बाधः, पक्षतावच्छेदकक्षितित्वसामानाधिकरण्येन सकर्तृकत्वसाधने घटादौ सिद्धसाधनमतः जन्यकृत्यजन्यं द्व्यणुकं सकर्तृकं कार्यत्वादित्यनुमानेन नित्यकृत्याश्रयेश्वरसिद्धिः।अत्र द्व्यणुकमित्येव पक्षनिर्देशः जन्यकृत्यजन्यमिति स्वरूपासिद्ध्यविषयताप्रतिपादनाय न पक्षतावच्छेदककोटौ निविशते नैष्फल्यात् ।

अत्र सकर्तृकमित्यस्य कर्तृजन्यमित्येवार्थः प्रतीयते तथा च कार्यं प्रति कर्ता कारणमिति स्वीकारे कर्तृत्वं कारणतावच्छेदकं तच्च कृतिमत्त्वं कृतिमत्त्वं च कृतिरेव सा च नानेति गौरवम् अतः कार्यं प्रति कृतिः कारणम् तथा च कृतित्वं कारणतावच्छेदकं तच्च नानाकृतिष्वेकमिति लाघवमिति सकर्तृकमित्यस्य कृतिजन्यमित्यर्थो बोध्यः इति द्व्यणुकं कृतिजन्यं कार्यत्वादित्यनुमानेन द्व्यणुकस्य कृतिजन्यत्वसिद्धौ क्षितिजनिका कृति यत्किंचिदात्मसमवेता कृतित्वात् इत्यनुमानेन अस्मदादिसमवेतत्वस्य बाधिततयाऽस्मदादिभिन्नेश्वरसिद्धिरिति भावः ।

३३—३ सत्प्रतिपक्षितत्वादिति । द्व्यणुकमकर्तृकं शरीराजन्यत्वात् इत्यनुमानेनेत्यर्थः शरीरपदानुपादाने द्व्यणुकस्य जन्यतया हेतोः स्वरूपासिद्धत्वमिति तद्वारणाय शरीरपदं

व्यभिचारवारकमिति तस्य वैयर्थ्यं व्यभिचारवारकविशेषणस्यैव सार्थकत्वादित्याह— व्यर्थविशेषणत्वेनेति ।

ननु स्वरूपासिद्धिवारकस्यापि विशेषणस्य सार्थकत्वं पक्षधरमिश्रादिसम्मतमिति नेदं दूषणमित्यपरितोषादाह नित्यत्वोपाधिकतयेति। अकर्तृकत्वमाकाशादौ तत्र नित्यत्वमिति साध्यव्यापकत्वम् अजन्यत्वं प्रागभावे आकाशादौ च तत्र प्रागभावे नित्यत्वाभाव इति साधनाव्यापकता एवं च शरीराजन्यत्वं अकर्तृकत्वव्यभिचारि नित्यत्वव्यभिचारित्वा-दित्यनुमानेन व्यभिचारानुमानात् द्व्यणुकमकर्तृकं शरीराजन्यत्वादित्यनुमानस्यासम्भवेन न सत्प्रतिपक्ष इत्यर्थः ।

३३—६ सत्प्रतिपक्ष इति । द्व्यणुकम् अशरीरमात्रकर्तृकत्वाभाववत् वस्तुत्वादित्यनु-मानाकारः ।

३३—१२ वह्निर्दाहानुकूलेति । अद्विष्टातीन्द्रियधर्मसमवायीत्येतन्मात्रोक्तौ वह्निद्व्य-णुकवृत्तिपरिमाणव्यक्तिमादाय भर्जनकपालस्थवह्निनिष्ठानुद्भूतरूपमादाय वा सिद्धसाधन-मतः—साध्ये दाहानुकूलेति । अदृष्टवदात्मसंयोगमादाय सिद्धसाधनमतोऽद्विष्टेति । वह्नि-निष्ठोष्णस्पर्शमादाय सिद्धसाधनमिति तद्वारणायातीन्द्रियेति ।

अदृष्टवदात्मवदिति । कार्यमात्रेऽदृष्टस्य हेतुतयेत्थमभिधानं यद्यप्यात्मनो दृष्टान्त त्वमसङ्गतं तस्य दाहजनकत्वे मानाभावात् तथापि कार्यमात्रे कर्तुरेव कारणतेति मता-भिप्रायेणैवमुक्तम् । अथ वा दाहजनकत्वमत्र न दाहकारणत्वं किन्तु दाहप्रयोजकत्वं तच्च कारणतत्कारणसाधारणं स्वरूपसम्बन्धरूपमिति कार्यमात्रकारणकृतिकारणात्मन्य-क्षतमिति ध्येयम् ।

३३—१३ उत्तेजकाभावेति । अयं भावः दाहं प्रति शक्तिर्न कारणं किन्तु प्रतिबन्धका-भाव एव तथा च न शक्तिसिद्धिरिति । न चोत्तेजकसत्त्वे प्रतिबन्धकसद्भावे कथं दाह इति वाच्यम् उत्तेजकाभावविशिष्टमण्यभावस्य हेतुत्वाङ्गीकारेणादोषात् । तथा च उत्ते-जकप्रतिबन्धकवह्नीनां समवधाने उत्तेजकाभावरूपविशेषणासत्त्वेन विशेषणाभावप्रयुक्तो विशिष्टाभावः वह्निमात्रसत्त्वे उत्तेजकाभावरूपविशेषणस्य सत्त्वेऽपि प्रतिबन्धकमणिरूप विशेष्यस्यासत्त्वेन विशेष्याभावप्रयुक्तो विशिष्टाभावः । उत्तेजकस्य वह्नेश्च सत्त्वे उत्ते-जकाभावरूपविशेषणस्य मणिरूपविशेष्यस्य चाभावादुभयाभावप्रयुक्तो विशिष्टा-भावः इति त्रिषु स्थलेषु दाहः । यत्र प्रतिबन्धकवह्नी तत्रोत्तेजकाभावविशिष्टमणेरेव सद्भावान्न दाह इति ।

३३—१७ तृणारणिमरणीनामिति । अयमभिप्रायः—वह्निं प्रति तृणस्यारणेर्मणेश्च कारणतेति व्यभिचारेण कस्यापि कारणत्वं न स्यादिति तत्तदव्यवहितोत्तरत्वमन्तर्भाव्य-कार्यकारणभावो वाच्यस्तार्किकैः अस्माकं तु वह्न्यनुकूलशक्तिमत्त्वेनानुगमसंभवान्न व्य भिचारो न वा गौरवम्। किं च शून्यस्याभावस्य कुत्रापि कारणत्वानङ्गीकारेण दाहं प्रति मण्यभावस्य कारणत्वानुपपत्तिश्च किंचास्माच्छब्दादयमर्थो बोध्यव्य इतीश्वरे-च्छायाः पदशक्तित्वे पदस्य गुणत्वेन गुणे गुणानङ्गीकारेण पदनिष्ठत्वानुपपत्तिः कारणे कञ्चिदतिशयमनापादयतो मणेः प्रतिबन्धकत्वानुपपत्तिश्च अस्माकं तु शक्तिरूपकारणवि घटनेनैव मणेः प्रतिबन्धकत्वमिति ।

३३—२३ ननु व्रीहियवयोः प्रदेयहविःप्रकृतित्वेनैकरूपेणैव यागकारणत्वसम्भवान्न तत्र व्यभिचारवारणाय शक्तिकल्पनमावश्यकमित्याशङ्कते—न च प्रदेयप्रकृतित्वेनेति ।

३३—२८ दत्तजलाञ्जलिरिति । व्रीहिजन्यतावच्छेदकापूर्वत्वजातेर्यवजन्यतावच्छेदकत्वाभावेन व्रीहियवयोर्विकल्पो न स्यादित्यर्थः ।

ननु तत्रापि शक्तेरुभयपर्याप्तत्वे व्रीहिमात्रादहृष्टं न स्यादिति व्रीहियवयोः समुच्चय एव स्यात्तथा च विकल्पोच्छेद इत्यत आह—शक्तेश्चेति ।

३३—२९ अन्यथेति । शक्त्यनङ्गीकारे इत्यर्थः । विकल्पसिद्ध्यर्थमहृष्टं प्रति व्रीहियवान्यतराभावविशिष्टव्रीहियवान्यतरस्य कारणताऽभ्युपगन्तव्येत्यर्थः ननु स्वप्रतियोगिकभेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपान्यतरत्वेन कारणत्वे गौरवमत आह—उभयाभावेति । व्रीहियवोभयाभावविशिष्टव्रीहेः, आदिना व्रीहियवोभयाभावविशिष्टयवस्य च कारणता कल्प्येत्यर्थः । तावतापि व्यभिचारवारणाय अव्यवहितोत्तरत्वनिवेश आवश्यक इति गौरवमन्यथा व्यभिचारः इत्याह—गौरवापत्तिः व्यभिचारश्चेति ।

३४–२० दिगिति । एवं च शक्तिस्त्रिधा सहजशक्तिराधेयशक्तिः पदशक्तिश्चेति ।

३४–२५ उत्तेजकेऽव्याप्तेरिति । उत्तेजकाभावो हि न कार्योत्पत्तिप्रतिबन्धकः प्रतिबन्धकाभावे उत्तेजकस्य सत्त्वेऽसत्त्वे वा कार्योत्पादादिति भावः ।

३४–२८ तद्घट इति । वस्तुतस्तु दण्डत्वादौ नियतपूर्ववर्तितायाः सत्त्वादतिव्याप्तिरत उक्तमन्यथासिद्धिशून्येति । तद्घटत्वावच्छिन्नेऽन्यत्र क्लृप्तपूर्ववर्त्याद्यन्यथासिद्धिमत्यपि घटत्वावच्छिन्नेऽनन्यथासिद्धे तद्रासभेऽतिव्याप्तिवारणाय नियतेति ।

ननु अन्यथासिद्धिशून्यत्वं कारणत्वमित्येवास्तु नियतपूर्ववर्तित्वदलं व्यर्थमिति चेदत्र केचित् अन्यथासिद्धित्वस्य जातित्वाभावेनाननुगततया कार्यनियतपूर्ववर्तिनिष्ठतत्तदन्यथासिद्धीनां कार्यानियतपूर्ववर्तिपटादिनिष्ठतत्तदन्यथासिद्धीनां चाभावकूटस्य निवेशापेक्षया कार्यनियतपूर्ववर्तिदण्डत्वादिनिष्ठतत्तन्यथासिद्धीनाभावकूटस्य निवेशेन लाघवम् इति एतादृशलाघवमनुसृत्य कार्यनियतपूर्ववर्तिदलम् इति ।

३४–३० गृहीतस्वतन्त्रेति । घटरूपकार्यं प्रति दण्डरूपस्य दण्डत्वस्य वाऽन्वयव्यतिरेकौ घटकारणीभूतदण्डमादायैव गृह्येते न स्वातन्त्र्येति घटं प्रति दण्डरूपं दण्डत्वं चान्यथासिद्धम् 'यत्र स्वाश्रयजन्यभ्रमिमत्त्वसम्बन्धेन दण्डरूपं दण्डत्वं वा तत्र घटः' इत्यन्वये 'यत्रोक्तसम्बन्धेन दण्डरूपाभावस्तत्र घटाभाव' इति व्यतिरेके च स्वाश्रयपदेन दण्डस्यैव ग्रहणेन दण्डमादायैवान्वयव्यतिरेकयोर्ग्रहणात् । स्वं दण्डरूपं दण्डत्वं वा तदाश्रयो दण्डः तज्जन्या भ्रमिश्चक्रे तज्जन्या भ्रमिः कपाले तत्र घटः इति बोध्यम् अन्वयव्यतिरेकयोः स्वातन्त्र्यं च स्वभिन्नप्रकृतकार्यकारणान्वयव्यतिरेकाप्रयुक्तत्वम् , तच्च प्रकृतान्वयव्यतिरेकयोर्नास्तीति सर्वं सुस्थम् ।

३४–३० अन्यनिरूपितेति । अन्यं प्रति पूर्ववर्तित्वं गृहीत्वैव यस्य यत्कार्यं प्रति पूर्ववर्तित्वं गृह्यते तस्य तत्कार्यं प्रत्यन्यथासिद्धत्वम् । यथा घटादिकं प्रत्याकाशस्य तस्य हि घटादिकं प्रतिकारणत्वमाकाशत्वेनैव स्यात् आकाशत्वं हि शब्दसमवायिकारणत्वम् एवं च तस्य शब्दं प्रति जनकत्वं गृहीत्यैव घटादिकं प्रति जनकत्वं ग्राह्यमतस्तदन्यथासिद्धम् एवं कुलालपितुरपि घटं प्रति जनकत्वं कुलालपितृत्वेनैव तच्च कुलालनिरूपितान्यथासिद्धिशून्यनियतपूर्ववर्तित्वं तद्गृहीत्वैव कुलालपितुर्घटं प्रति नियतपूर्ववर्तित्वं ग्राह्यमतस्तदप्यन्यथासिद्धम् ।

३४–३१ क्लृप्तान्वयेति । अवश्यक्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्य-

थासिद्धमित्यर्थः। यथा यत्र यत्किञ्चिद्घटव्यक्तिं प्रति रासभस्य नियतपूर्ववर्तित्वमस्ति तत्र अन्यत्र क्लृप्तनियतवर्तिभिर्दण्डादिभिरेव तद्व्यक्तेरपि सम्भवे रासभोऽन्यथासिद्धः इति समन्वयः।

३९—९ कारणं द्विविधमिति। अयं भावः दण्डनिष्ठा या कारणता तस्या दण्डत्वमवच्छेदकम् तत्र अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वमिति नियमः एवं च यदि फलोपधायकतारूपैव कारणता स्वीक्रियेत तदा दण्डत्वस्य अरण्यस्थदण्डे सत्त्वात्कारणत्वस्य च तत्रासत्त्वात् दण्डत्वमवच्छेदकं न स्यादतः स्वरूपयोग्यतारूपापि कारणता स्वीक्रियत इति।

३८—१९ रजतोत्पत्त्यङ्गीकार इति। ननु रजतोत्पादकानां रजतावयवादीनामभावेन शुक्तौ कथं रजतोत्पत्तिरिति चेदुच्यते काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचिक्याकारा च काचिदन्तः करणवृत्तिरुदेति तस्यां च वृत्तौ इदमवच्छिन्नं चैतन्यं प्रतिबिम्बते तत्र इन्द्रियद्वारा अन्तःकरणं विषयदेशं गत्वा विषयाकारेण परिणमतेइति एकदेशस्थितोपाधिद्वयस्य भेदकत्वाभावेन अन्तःकरणपरिणामरूपायां वृत्तौ प्रतिबिम्बितं चैतन्यम् इदमवच्छिन्नचैतन्यं चाभिन्नम् ततश्च प्रमातृचैतन्याभिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाऽविद्या चाकचिक्यादिसादृश्यसंदर्शनसमुद्बोधितरजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण परिणमते इति रीत्या रजतोत्पत्तिसम्भव इति भावः।

४१–९ तेषां–प्रयत्नसुखादीनाम्। अयावच्छरीरभावित्वेनेति। शरीरनिष्ठा हि रूपादयो गुणा यावच्छरीरभाविनः यत्नादिकं तु न तथा मृतशरीरेऽभावात्। अयावच्छरीरभावित्वं च शरीरनिष्ठात्यन्ताभावप्रतियोगित्वम्, अनुमानाकारश्च यत्नादिकं न शरीरगुणः अयावद्द्रव्यभावित्वाच्छब्दवत् इति।

४१–१० किंचेति। अवयविविशेषगुणेषु घटरूपादिषु अवयवगुणपूर्वकत्वं दृष्टं न च ज्ञानादौ तथेत्यर्थः। द्व्यणुकपरिमाणस्य परमाणुगतद्वित्वसंख्याजन्यत्वेन अवयवगुणपूर्वकत्वाभावेन व्यभिचारः स्यादतो विशेषपदम् नन्वेवमपि चित्ररूपे व्यभिचार इति चेन्न चित्ररूपानङ्गीकारात्।

४१–१६ मनसो विभुत्वनये त्विति। दीर्घशष्कुलीभक्षणादावेकदाऽनेकेन्द्रियज्ञानदर्शनान्मनसो विभुत्वमिति तेषां भावः।

४१—३२ निष्प्रकारकमेवेति। तत्त्वमस्यादिवाक्यैः शक्त्या निष्प्रकारकबोधाजननेऽपि लक्षणया निष्प्रकारकबोधजननम् आकाशपदाच्छक्त्या निष्प्रकारकोपस्थितिवदिति भावः। यदि तु आकाशपदान्न निष्प्रकारकोपस्थितिरिति मतं विभाव्यते तदापि शक्त्या सप्रकारकत्वधीजनकत्वनियमेऽपि लक्षणया तथात्वे मानाभावः सोऽयं देवदत्तः प्रकृष्टप्रकाशः शशीत्यादौ लक्षणया निष्प्रकारकबोधस्य दर्शनात् अत एव 'सविकल्पकवाक्यार्थबोधे सविकल्पपदार्थोपस्थितिः निर्विकल्पकवाक्यार्थबोधे च निर्विकल्पकपदार्थोपस्थितिरङ्गम्' इति सिद्धान्तबिन्दौ श्रीमधुसूदनसरस्वतीचरणाः। उपनिषज्जन्यं प्रत्यक्षमिति। शब्दादपि प्रत्यक्षस्य वेदान्तिभिरङ्गीकारादिति भावः।

इत्यनुमानपरिच्छेदः।

४९—२१ उपमितिरिति। अनेन सदृशी मदीया गौरित्येवंरूपा।

४९—२६ व्यासज्यवृत्तितयेति। व्यासज्यवृत्तिधर्मप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणताया द्वित्वादिप्रत्यक्षे क्लृप्तत्वादिति भावः।

४६—४ अयं गवयपदवाच्य इत्येवं शक्तिग्रहे गवयान्तरे शक्तिग्रहो न स्यादित्य-रुचेराह—गवयो गवयपदवाच्य इति ।

इत्युपमानपरिच्छेदः ।

४६—३३ सन्निकर्षत्वायोगादिति । सम्बन्धो हि सम्बन्धिभ्यां भिन्ना द्विष्ठो विशिष्ट-बुद्धिनियामकश्च भवतीति भावः ।

४७—२१ षड् युक्तयः-षट् प्रमाणानि ।

इत्यभावपरिच्छेदः ।

४८—१ जन्यपदेति । जन्या या पदधीस्तज्जन्यत्वव्यभिचारिणी यानुभवत्वव्यापिका जातिः प्रत्यक्षत्वमनुमितित्वं च पदविषयकत्वाव्यभिचारिणी जातिरुपमितित्वम् उपमितेरयं गवयपदवाच्य इत्येवंरूपत्वेन पदविषयकत्वं तादृशजातिशून्यत्वं शाब्दप्रमायामेवेति समन्वयः ।

४८—६ स्वकरणकेति । पदकरणकं यच्छाब्दज्ञानं घट इत्याकारकं तत्र प्रकारः घटत्वं तत्प्रकारिका प्रमा अयं घटत्ववानित्याकारिका अयं घट इत्याकारिका वा तज्जन्यः शब्दः घटशब्द इत्यर्थः ।

४८—१० न त्वेकाख्यातत्वमिति । अत एव तिङ्ङतिङः इति सूत्रेऽतिङ्ग्रहणं पचति भवतीत्यत्र महाभाष्योक्तमेकवाक्यत्वं च संगच्छते पश्य मृगो धावतीति । मृगाभिन्नाश्रयवृत्तिधावनानुकूलव्यापारकर्मकं त्वदभिन्नाश्रयवृत्ति प्रेरणाविषयीभूतं दर्शनमिति बोधः।

४९-२२ विशेष्यत्वनियम इति । ओदनं पचतीत्यत्र ओदननिष्ठविक्लित्त्यनुकूलव्यापारानुकूला कृतिरिति पच्यते ओदन इत्यत्र व्यापारजन्यविक्लित्त्याश्रय ओदन इति बोधः अत्र पाकपदेन कृतिः ।

५२—३१ तद्धेतोरिति न्यायेनेति । तद्धेतोरेव तत्त्वे किं तेनेति न्यायाकारः ।

५३—१९ जन्यत्वापेक्षयेति । तन्निष्ठान्यथासिद्ध्यनिरूपकत्वे सति तन्नियतोत्तरवर्तित्वं जन्यत्वम् प्रयोज्यत्वं च तन्नियतोत्तरवर्तित्वमात्रम् ।

५७—१ प्रयोजकवाक्येति । घटानयनप्रवृत्तिः घटानयनधर्मिकेष्टसाधनताज्ञानजन्या प्रवृत्तित्वात् मदीयस्तनपानादिप्रवृत्तिवदित्यनुमानेनेष्टसाधनताज्ञानमनुमाय घटानयनधर्मिकेष्टसाधनताज्ञानं घटमानयेति शब्दकरणकं तन्नियतोत्तरवर्त्तित्वात् इति शब्दस्य तादृशबोधे हेतुतामनुमिनोति एवं च असम्बद्धस्य जनकत्वानुपपत्त्या शब्दार्थयोः शक्तिरूपः सम्बन्धः कल्प्यत इति भावः ।

५७—१६ परम्परासम्बन्धेनेति । स्वशक्यसमवेतगुणसजातीयगुणवत्त्वरूपेणेत्यर्थः ।

५८—३ प्राञ्च इति । लक्ष्यलक्ष्यतावच्छेदकसाधारणस्य एकस्यानारोपितशक्यसम्बन्धस्यासम्भवादिति भावः ।

५८—५ नव्या इति । एवं च तीरे प्रवाहस्य सामीप्यरूपः तीरत्वे च स्वसमीपवृत्तित्वरूपः, सम्बन्धः शक्यसम्बन्धो लक्षणेत्यत्र। जात्यभिप्रायमेकवचनम् तीरत्वे प्रवाहसामीप्यस्यारोपो वेति भावः ।

५८—८ तदसम्भवादिति । वेदस्यापौरुषेयत्वेन तात्पर्यासम्भवादित्यर्थः ।

५८—१४ सर्वलाक्षणिकस्थले—धूमादित्यत्रेत्यर्थः । अत्र धूमपदस्य धूमज्ञाने पञ्चम्याश्च ज्ञाप्यत्वे लक्षणा ।

६०—१८ भेदरूपः संसर्गरूपश्चेति । अयं भावः राजपुरुषः इत्यतो राजसम्बन्धवान्

पुरुष इति बोधाङ्गीकारे विरोधाभावाद्राजपुरुषो देवदत्तस्य चेति प्रयोगापत्तिरतो भेदो वाक्यार्थः तथा च राजेतरसम्बन्धिभिन्नः पुरुष इति बोधः एवं च विरोधान्न तादृशः प्रयोगः भेदमात्रस्यैव वाक्यार्थत्वे अस्वामिके राजपुरुष इति प्रयोगापत्तिः तस्य राजेतर-सम्बन्धिभिन्नत्वादतः संसर्गोऽपि वाक्यार्थः ततो राजेतरसम्बन्धिभिन्नो राजसम्बन्धवांश्च पुरुष इति बोधः इति ।

६०—२८ विशिष्टस्येति । यथा दण्डी पुरुष इति । अत्र पुरुषत्वविशिष्टे दण्डत्वविशि-ष्टस्य वैशिष्ट्यं ( संसर्गो ) भासते । नीलदण्डवानिति । पुरुषे दण्डो विशेषणं तत्र च नैल्यं विशेषणं विशेषणत्वं नाम विद्यमानत्वे सति व्यावर्तकत्वे सति विधेयान्वयित्वं प्रकृते च नैल्यस्य न पुरुषे विशेषणत्वम् । दण्डीति । अत्र दण्डविशिष्टे देवदत्ते कुण्डलवैशिष्ट्यं भासते । दण्डी कुण्डलीत्यत्र एकत्र ( देवदत्ते ) दण्डकुण्डलयोरुभयोर्वि-शेषणत्वम् इति ।

६१—१२ गौरवादिति । लः कर्मणीति सूत्रं तु तिबादिनिष्ठां बोधकतारूपां शक्तिं तत्त-त्स्थानित्वेन कल्पिते लकारे आरोप्येति बोध्यम् ।

६३—१९ इष्टसाधनत्वस्येति । इष्टसाधनत्वज्ञानाभावात् जलताडने कृतिसाध्यत्वज्ञा-नाभावात् सुमेरुशृङ्गाहरणे बलवदनिष्टाननुबन्धित्वज्ञानाभावाच्च मधुविषसम्पृक्तान्नभोजने न प्रवृत्तिः । वस्तुतस्तु आस्तिककामुकस्य बलवदनिष्टानुबन्धित्वज्ञानसत्त्वेऽपि अग-म्यागमने प्रवृत्तेर्व्यभिचारेण बलवदनिष्टाननुबन्धित्वज्ञानं न प्रवृत्तिहेतुः किन्तु बलवद्द्वेषः प्रतिबन्धकः इति ।

६७—२९ पुष्पवन्तशब्दवदिति । एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकराविति कोशेन एकयैव शक्त्या पुष्पवन्तपदाच्चन्द्रसूर्ययोर्यथा बोधस्तथा लिङापि इष्टसाधनत्वा-दित्रिकमेकयैव शक्त्या बोध्यत इत्यर्थः ।

७६—१० उत्पत्त्यादिरूपं फलमिति । स्फुटं चैतत् 'रोहितो लोहितादासीद् धुन्धुस्त-स्य सुतोऽभवत्' इत्यादिप्रयोगेष्ववगम्यते ।

७६—१४ सूचयतीति । अयं भावः भूश्च वाश्च भूवौ आदिश्च आदिश्च आदी भूवाद्यौ येषां ते भूवादयः एक आदिशब्दो व्यवस्थावाची तत्र भूपदार्थस्य एकश्च प्रकारवाचो तत्र वापदार्थस्यान्वयस्तथा च भूप्रभृतयो वासदृशा इत्यर्थो लभ्यते सादृश्यं च क्रिया-वाचकत्वेन तथा च क्रियावाचिनो भ्वादयो धातुसंज्ञां लभन्त इति सूत्रार्थः क्रिया च व्या-पार एव तथा च व्यापारवाचकत्वाभावे धातुसंज्ञैव न स्यादिति धातुत्वान्यथानुपपत्तिरेव भ्वादीनां क्रियावाचितां गमयतीति ।

७६—१८ आहुरिति । तथा च देवदत्तस्तण्डुलं पचतीत्यत्र देवदत्तस्याभेदसम्बन्धेन तिङर्थैकत्वस्य च समवायेन तिङर्थाश्रयेऽन्वयः । तिङर्थाश्रयस्य वृत्तित्वसम्बन्धेन, क्रियाकर्मभावसम्बन्धेन तण्डुलान्वितफलस्य अनुकूलत्वसम्बन्धेन, वर्तमानकालस्य च वृत्तित्वसम्बन्धेन, व्यापारेऽन्वयः इति देवदत्ताभिन्नैकत्वावच्छिन्नाश्रयवृत्तिस्तण्डुलक-र्मकविक्लित्यनुकूलो वर्तमानकालिको व्यापार इति बोधः भावप्रधानमाख्यातं सत्त्वप्र-धानानि नामानि इति निरुक्तात् । एवं देवदत्तो ग्रामं गच्छतीत्यत्र देवदत्ताभिन्नैकत्वा-वच्छिन्नाश्रयवृत्तिग्रामकर्मकसंयोगानुकूलो वर्तमानकालिको व्यापारः इति बोधः । एवं देवदत्तो हरिंभजतीत्यत्र देवदत्ताभिन्नैकत्वावच्छिन्नाश्रयवृत्तिर्हरिकर्मकप्रीत्यनुकूलो वर्तमा-नकालिको व्यापारः इति बोधः एवमन्यत्राप्यूह्यम् ।

देवदत्तेन तण्डुलः पच्यते इत्यत्र फलविशिष्यको बोधः भावप्रधानमिति निरुक्तवचनेन व्यापारस्यैव भवत्यसौ भाव इति व्युत्पत्त्या फलस्यापि विशेष्यताया लाभात् सुप आत्मनः क्यजिति सूत्रभाष्याच्च तथाहि तत्र पुत्रमिच्छतीत्यत्रेव पुत्र इष्यते इत्यत्र क्यच्कुतो नेत्याशङ्क्य भिन्नार्थकत्वान्नेति समाहितं तस्य भिन्नविशेष्यकत्वादित्यर्थः इति एवं च देवदत्तस्य क्रियाकर्तृभावसम्बन्धेन व्यापारे तस्य च जन्यत्वसम्बन्धेन फले तण्डुलस्य चाभेदेन तेप्रत्ययार्थाश्रये तत्रैवै-कत्वसंख्याया अन्वय इति । देवदत्तकर्तृकवर्तमानकालिकव्यापारजन्या तण्डुलाभिन्नैकत्वावच्छिन्नाश्रयवृत्तिर्विक्लित्तिरिति बोधः देवदत्तेन ग्रामो गम्यत इत्यत्र देवदत्तकर्तृकवर्तमानकालिकव्यापारजन्यः ग्रामाभिन्नैकत्वावच्छिन्नाश्रयवृत्तिः संयोग इति बोधः देवदत्तेन हरिः भज्यते इत्यत्र देवदत्तकर्तृकवर्तमानकालिकव्यापारजन्या हर्यभिन्नैकत्वावच्छिन्नाश्रयवृत्तिः प्रीतिरिति बोधः ।

७६—२३ आहेति । अत्रारुचिबीजं तु एकत्रान्वितस्यापरत्र विशेषणतयान्वयायोग इति व्युत्पत्त्या व्यवस्थायामन्वितस्य भूपदार्थस्य प्रकारेऽन्वयायोग एवेति बोध्यम् ।

७६—२४ अत्र मण्डन इति । एतन्मते देवदत्तस्तण्डुलं पचतीत्यत्र एकत्वावच्छिन्नदेवदत्तवृत्तिः तण्डुलनिष्ठविक्लित्त्यनुकूलो वर्तमानकालिको व्यापार इति बोधः प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोश्च प्रत्ययार्थः प्रधानमिति न्यायात् भावप्रधानमिति निरुक्ताच्च । देवदत्तेन ग्रामो गम्यते इत्यादावपि व्यापारविशेष्यक एव बोधः ।

७६—३२ ग्रामो गमनवान् इति । भावार्थकप्रत्ययानां साधुत्वमात्रार्थकतया धातोश्च फलमात्रबोधकतया गमनं संयोग एव तथा च ग्रामः संयोगवान् इतिवत् ग्रामो गमनवानित्यपि स्यादिति भावः ।

७६—३३ निरूपकत्वादिसम्बन्धविशेषेणेति । अयं भावः यथा संयोगस्य समवायेन कुण्डबदरोभयनिष्ठत्वेऽपि कुण्डे बदरमिति प्रयोगो भवति न तु बदरे कुण्डमिति बदरानुयोगिकसंयोगस्य वृत्त्यनियामकत्वात् एवं ग्रामो गमनवानिति प्रयोगो न भवति ग्रामानुयोगिकस्य संयोगस्य वृत्त्यनियामकत्वादिति ।

७७—२६ इत्याहुरिति । ग्रामो गम्यत इत्यादौ च तेप्रत्ययेन फलं बोध्यत इति तेषामाशयः ।

७८—२६ घञादिसमभिव्याहारस्येति । तथा च गमधातोः संयोगमात्रार्थकत्वेऽपि ल्युडादिसमभिव्याहारे व्यापारे लक्षणया न ग्रामो गमनवानिति प्रयोगस्यापत्तिः । फलप्रत्ययेति । धातुना फलोपस्थितौ जननीयायां तदुत्तरघञादिप्रत्ययज्ञानं प्रतिबन्धकमिति भावः ।

केचित्तु भाव इति सूत्रेण भावप्रत्ययस्य व्यापारवाचित्वं न तु साधुत्वमात्रार्थत्वं तदा उक्तप्रयोगाणामापत्तिर्नास्तीत्याहुः । तन्मतं खण्डयति–घञादेरिति ।

७८—२९ इदानीं वैयाकरणमतमुपसंहरति स्वमते–अतः फलव्यापारौ धात्वर्थं इति ।

७९—३ तावदन्यतमत्वमिति । अतो न नानार्थत्वम् अननुगतनानाधर्मावच्छिन्नशक्तिनिरूपकतावच्छेदकैकधर्मवत्त्वस्यैव नानार्थत्वात् । ननु अन्यतमत्वस्य शक्यतावच्छेदकत्वे स्वप्रतियोगिकभेदद्वयाधिकभेदावच्छिन्नप्रतियोगिताकभेदवत्त्वरूपस्य तस्य शक्यतावच्छेदकत्वेऽत्यन्तं गौरवमिति चेन्न–अन्यतमत्वस्य तावत्समुदायवृत्तिधर्मविशेषस्य अखण्डोपाधेरङ्गीकारेणादोषात् तस्याखण्डत्वे विवादेऽप्याह—फलानुकूलत्वमिति ।

७१—८ विवक्षाया इति । तथा च यदा यदीयो व्यापारो धातुवाच्यत्वेन विवक्ष्यते

तदा स कर्ता इति करणादिव्यापारस्य धातुवाच्यत्वेन विवक्षायां काष्ठानि पचन्तीति इष्यत एव तदुक्तं हरिणा—धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यत इति ।

७९—२९ प्रत्ययार्थोद्देशेनेति । यः प्रत्ययार्थः स प्रधानम् इत्यर्थस्वीकारे असति प्रतिबन्धके उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासत इति नियमेन प्रत्ययार्थत्वव्यापकत्वं प्राधान्ये भासेत तच्च न सम्भवति लिङ्गसंख्ययोः प्रत्ययार्थत्वेऽपि प्रधानत्वाभावात् । नापि यः प्रधानं स प्रत्ययार्थ इत्यर्थः खट्वा इत्यादौ खट्वायाः प्राधान्येऽपि प्रत्ययार्थत्वाभावेन प्रत्ययार्थत्वस्य प्राधान्यव्यापकत्वायोगादिति भावः ।

८०—१ यत्नो वाच्य इति । न च लःकर्मणि च भावे चाकर्मकेभ्यः इति सूत्रे कर्तरि कृदिति सूत्रात्कर्तरीत्यस्यानुवृत्त्या कर्तरि लकारविधानात्कथमेतदिति वाच्यम् कर्तृपदस्य भावप्रधाननिर्देशेन कृतिपरत्वेन कृतौ लकारविधानलाभात् कर्तरि कृदित्यत्र तु न कृतिपरत्वं देवदत्तः कर्तेत्यादौ सामानाधिकरण्यानुरोधेन कर्तृपरत्वस्यैवौचित्यात् न चैवं शब्दाधिकाराश्रयणापत्तिः, शक्तिः कारकं शक्तिमच्च कारकमिति पक्षयोर्महाभाष्ये उक्ततया कर्तरि कृदित्यत्र शक्तिमत्परस्यापि कर्तृपदस्य उत्तरत्र शक्तिपरत्वे बाधकाभावात् ।

८०—१३ प्रत्ययार्थप्राधान्यबोधकस्मृतेरिति । प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति स्मृतेरित्यर्थः । न च भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि इति स्मृत्या विरोध इति वाच्यम् भावप्रधानमित्यत्र भावस्य धात्वर्थस्य प्रधानं भावप्रधानमिति तत्पुरुषेण आख्यातपदस्य च तिङ्परत्वेन धात्वर्थापेक्षया तिङर्थः प्रधानमित्यर्थस्य प्रकृतिप्रत्यययोरिति न्यायैकवाक्यतानुरोधेन स्वीकारेणादोषात् ।

८०—१६ तण्डुलादौ वेति । वस्तुतस्तु कर्मणि ल इत्यस्य कर्मत्वे ल इत्यर्थेन फलमेव कर्मप्रत्ययार्थः तदा च देवदत्तेन तण्डुलः पच्यते इत्यादौ देवदत्तवृत्तिकृतिजन्यो यो विक्लित्यनुकलव्यापारस्तजन्यविक्लित्तिमान् तण्डुल इति बोधः फलव्यापारयोश्च विशिष्ट एव शक्तिः तृतीयार्थश्च कृतिः आनुभाविकत्वात्फलस्य द्विधाभानं न क्षतिकरम् व्यापारमात्रं वा धात्वर्थः कर्मद्वितीयया कर्माख्यातेन वा फलस्य भान सम्भवादिति बोध्यम् ।

८०—२९ जन्यत्वादि चेति । फले व्यापारे च खण्डशः शक्तिः कर्तृप्रत्ययस्थले अनुकूलत्वं कर्माख्याते च जन्यत्वं संसर्गमर्यादया भासत इति भावः ।

८१—८ किंच यतते इति । प्रकृत्या प्रत्ययेन च कृतेरेवोपस्थित्या घटो घट इति वदनन्वयापत्तिरित्यर्थः ।

८१—२४ अखण्डोपाधिरूपमिति । अत एव राजपुरोहितौ सायुज्यकामौ यजेयाताम् इत्यादौ कर्तृत्वस्य राजपुरुषयोः पर्याप्तिः कृतिरूपत्वे तु कृतेरव्यासज्यवृत्तितया सा न स्यादित्याह अत एवेति ।

८२—१० अनेनेति । प्रत्याहारान्तः पातिनामनुप्रयोगस्वीकारे तद्बहिर्भूतस्य यतते कथमनुप्रयोगापादनमिति चिन्त्यमिदम् ।

८५—३ साक्षात्परम्परासम्बन्धेनेति । पिङ्गाक्ष्यादेः साक्षादारुण्यादेः परम्परयेत्यर्थः । यद्वा तण्डुलादेर्विक्लित्तावन्वयेन परम्परया तस्य व्यापारेन्वयः । केचित्तु तण्डुलादेरपि व्यापार एवान्वय इति वदन्ति ।

८५—७ यजेतेत्यादावाश्रयेति । दम्पत्योः सहाधिकारेण कर्तृत्वाश्रयभेदेऽपि एकस्यैव कर्तृत्वस्योभयत्रपर्याप्तेः तत्रैकत्वान्वयो नानुपपन्न इति भावः ।

८६—२१ अनुशासनैकवाक्यतेयति । कर्तृगते कर्मगते वाऽनभिहिते एकत्वादौ तृतीयाद्येकवचनादिरिति सूत्रार्थः ।

८७—३३ लट्प्रयोगाधिकरणेति । अत्र लट्प्रयोगाधिकरणकालपदेन प्रहरात्मकं दिनात्मकं वा कालमादाय पाकानन्तरमपि पचतीति स्यादत आह लट्शब्देति । कालोपाधेः क्षणादिरूपस्य ग्रहणे न दोष इति भावः । अत्रापि प्रहरात्मककालोपाधिमादाय दोषतादवस्थ्यमित्यत आह—अतीतेति । वर्तमानकालोऽपि भाविकालमादाय अतीतभविष्यत्कालातिरिक्तः स्यादतः यस्माद्धातोवर्तमानकालिकः प्रत्ययश्चिकोर्षितस्तद्धातुविशिष्टत्वं वर्तमानत्वम् वैशिष्ट्यं च स्वप्रयोगाधिकरणत्व स्ववाच्यक्रियाकलापविशिष्टत्वोभयसम्बन्धेन अत्र वैशिष्ट्यं स्वघटकाद्यक्रियाप्रागभावानधिकरणत्व स्वघटकचरमक्रियाध्वंसानधिकरणत्व स्वघटकक्रियाधिकरणत्वैतत्रितयसम्बन्धेन । अतीते वर्तमानत्वविवक्षया लड्वारणायाद्यदलम् । क्रियारम्भप्राक्कालमादाय वर्तमानत्ववारणाय क्रियाकलापवैशिष्ट्यनियामक आद्यः सम्बन्धः क्रियारम्भप्राक्कालमादाय वर्तमानत्ववारणाय द्वितीयः यत्र पाक उपक्रान्तः प्रतिबन्धकवशाच्च न सम्पन्नस्तत्र पचतीतिवारणाय तृतीयः सम्बन्धः ।

८९—११ वाक्यपरिसंख्यार्थमिति । समासेतरस्य पूर्वभागपदकसमुदायेतरस्य प्रतिपदिकसंज्ञा नेति तदर्थः । 'तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते' इति हि परिसंख्या लक्षणम् । वैयाकरणास्तु नियमपरिसंख्ययोरुभयोरपि अन्यनिवृत्तिरूपफलसाम्येन 'भक्ष्यनियमे अभक्ष्यप्रतिषेधो गम्यते' इतिमहाभाष्येण च नियमत्वं व्यवहरन्ति

९०—१० हेतुतापीति । गोत्वप्रकारकबोधं प्रति गोत्वशक्तं गोपदमिति शक्तिज्ञानं कारणम् न तु गोत्वं गोपदशक्यमित्याकारकं तथा सति गोत्वत्वस्य धर्मितावच्छेदकत्वेन गौरवापत्तेः ।

९०—२१ समानसंविदिति । एका या संविद् तद्वेद्यत्वम्—एकज्ञानविषयत्वमिति यावत् यज्ज्ञाने घटत्वं भासते तत्रैव घटोऽपीति भावः ।

९४—६ ज्ञोऽविदर्थस्येति । अविदर्थस्येति च्छेदः, अन्यथा लाघवायासन्देहाय च विदर्थस्य ज्ञ इत्येव वदेत् ।

९८—६ यस्य चेश्वरवचनमिति । उच्यते इति वचनम् ईश्वरवचनमितिपदं तन्त्रेण यच्चिह्नमीश्वरत्वमुच्यते इत्यर्थकं यस्य ईश्वर उच्यते इत्यर्थकं च । तत्राद्योदाहरणम् अधिरामे भूः, द्वितीयोदाहरणं अधि भुवि राम इति ।

९९—७ सहयुक्त इति । अप्रधानत्वं शाब्दगुणक्रियान्वयित्वाभावरूपम् पुत्रसाहित्यविशिष्टः पिता आगत इत्यत्र शाब्दबोधे पुत्रस्य न आगमनक्रियायामन्वयोऽतोऽप्रधानत्वम् ।

९९—१६ येनाङ्गविकार इति । अङ्गशब्दोऽर्थआद्यजन्तः तेन अङ्गिनो विकार इत्यर्थः।

रामेश्वरतनूजन्मा सूर्यनारायणः सुधीः ।
भाट्टचिन्तामणेस्तर्कपादेऽकार्षीत्सुटिप्पणम् ॥

इति भाट्टचिन्तामणि मयूखे तर्कपादः समाप्तः ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृ० | पं० |
|---|---|---|---|
| लप्रकारक | शब्दप्रकारक | ९ | ३० |
| बाह्येन्द्रिय | बाह्यैकेन्द्रिय | १६ | १७ |
| दर्शनाद्देशान्तरे | दर्शनादेकदेशान्तरे | २३ | १५ |
| पञ्चरूपत्व | पञ्चरूपोपपन्नत्व | २६ | ३१ |
| व्यापकत्वाग्राहक | व्यापकत्वग्राहक | २७ | २२ |
| आलोकवान्र्वत | आलोकवान्पर्वत | २९ | ३० |
| प्रतिज्ञादेतुभ्या | प्रतिज्ञाहेतुभ्या | ३१ | १४ |
| विगमने | निगमने | ३१ | १५ |
| भिरव | भिरेव | ३१ | १६ |
| निरययव | निरवयव | ३२ | ५ |
| प्रतिबन्धो न | प्रतिबन्धेन | ३२ | १६ |
| विवक्षतिरेद्दृष्टे | विवेक्षतिरद्दृष्टे | ३६ | १ |
| ऽबाधित | बाधितत्वे च | ३७ | १९ |
| तदैच्छत् | तदैक्षत | ३८ | २५ |
| पुरुरुप | पुरुरूप | ३९ | २२ |
| पश्यति | पश्यते | ३९ | २५ |
| बीजभावेन | बीजाभावेन | ४२ | २३ |
| भोगनेति | भोगेनेति | ४३ | २७ |
| श्रुद्धिजनकम् | शुद्धिजनकम् | ४४ | १८ |
| योगजन्यं | यागजन्य | ४६ | २१ |
| न्नाक्तोतिप्रसङ्गो | नोक्तातिप्रसङ्गो | ६० | ८ |
| रूढः प्राबल्य | रूढेः प्राबल्य | ६० | १५ |
| शचादि | शौचादि | ६४ | ५ |
| रित्याहुः | रित्याह | ७७ | २४ |
| कापारस्य | व्यापारस्य | ८१ | ५ |
| पारक्षीणे | परिक्षीणे | ८९ | ३२ |
| शक्त्यभावन | शक्त्यभावेन | ९० | ३२ |

इति शुद्धिपत्रम् ।

अपूर्वोऽवसरः !   दुर्लभानि ! ग्रन्थरत्नानि !   त्वर्यताम्

## न्यायरत्नावली-नारायणी-टीकाद्वयोपेतः

# सिद्धान्तबिन्दुः

नामा ग्रन्थः, यस्य निर्मातारः विदितकीर्तयः प्रातःस्मरणीया अद्वैतसिद्ध्यादिप्रणेतारः श्रीमधुसूदनसरस्वतीन्द्राः सन्तीत्येतावदेवास्य वैशिष्ट्यद्योतनायालम् । अथापि स्वतन्त्रप्रबन्धेष्वद्वैतसिद्ध्यादिषु विस्तरतो यदुक्तं तदेव आचार्यीयदशश्लोकीव्याख्याव्याजेन संक्षिप्यात्रोपनिबद्धमिति तदीयटीकाकारैरेवोक्तं ग्रन्थारम्भप्रतिज्ञावसरे यथा—

अद्वैतसिद्धेष्टिकायास्तदीयायाश्च सङ्ग्रहात् ।
विचित्ररचना काचिद् ब्रह्मानन्देन रच्यते । इति ।

एते टीकाकृतोपि गुरुलघुचन्द्रिकादिटीकाग्रन्थैरत्यन्तं प्रसिद्धाः पण्डितप्रकाण्डा गौडब्रह्मानन्दा इति तैरेवास्यापि न्यायरत्नावली टीका कृता । अस्याष्टीकाया वैशिष्ट्यं तरैवोद्घोषितमिति सर्वं तथाभूतमेव । अद्वैतसिद्ध्याद्यनेकग्रन्थसारभूतायां न्यायरत्नावल्यां विबुधविनोदार्थं विविधा विषया विनिवेशिता इत्यतो वेदान्तविद्यास्वस्य वैशिष्ट्ये विपश्चिदपश्चिमानां विवादाभाव एव ।

अस्य द्वितीया टीका ब्रह्मानन्दगुरुचरणानां नारायणतीर्थानामस्ति । एतेषां पाण्डित्यपरिचयप्रदानं नाम प्रदीपैः प्रचण्डरश्मेः प्रदर्शनमेवेति मन्ये । सर्वशास्त्रेष्वेभिः स्वतन्त्रप्रबन्धाः टीकाश्च निर्मिता उपलभ्यन्ते । एतेषामेव महद्व्याख्या सिद्धान्तबिदावन्या वर्तते इति लघुव्याख्यास्थैः "विस्तरस्तु अस्मत्कृतमहद्व्याखाने द्रष्टव्य" इति स्वशब्दैरेव ज्ञायते इत्यस्या लघुव्याख्येति व्यवहारः, परमद्यावधि कुत्राप्यस्या महद्व्याख्यायाः पुस्तके नोपलब्धमिति महदेव विषादस्थानम् । एषा टीका अद्यावधि मुद्रिता नासीदिति सुदुर्लभत्वं स्वाभाविकमस्याः, अतः टीकाद्वयाभ्यां पाठान्तरटिप्पणीभ्यां भूमिकानुक्रमणिकादिभिश्च सहितो ऽत्यन्तमनोहरैरायसाक्षरैः सम्मुद्र्यतेऽ ग्रंथो बहोःकालात । स्वल्पेनैव समयेन ४) चतुर्मुद्रालभ्यो विदुषां सुलभो भविष्यतीति शैघ्र्यं कार्यमस्य सङ्ग्राह्यस्य सङ्ग्रह इति ।

## अस्मत्प्रकाशितमीमांसाशास्त्र ग्रन्थाः ।

१ श्लोकवार्तिकम्—भट्टकुमारिलविरचितम् । श्रीपार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् इदं मीमांसाशास्त्रोपरि दुर्बुद्धिभिः क्रियमाणानां दूषणानां निकारणेऽतीव दृढतरार्थगर्भम्, एतत्कर्ता सुप्रसिद्धः कुमारिलभट्टः । अस्य मतमेव लोके भाट्टमतमिति प्रचलितम् । श्लोकवार्तिकं प्रथमाध्यायप्रथमपादस्यैव, प्रथमाध्यायद्वितीयपादात्तृतीयाध्यायपर्यन्तं सम्पूर्णं तन्त्रवार्तिकम् । चतुर्थाध्यायप्रथमपादात् द्वादशाध्यायपर्यन्त टुप्टीका च सम्पूर्णा । मीमांसाप्रथमाध्यायप्रथमपाद शाबरभाष्यग्रन्थः सव्याख्यश्लोकवार्तिकं विना न बोद्धुं शक्यते इति सव्याख्योऽयं ग्रन्थोऽस्माभिर्मुद्रितः । अस्मिन् श्लोकवार्तिके चतुर्थसूत्रमारभ्य प्रमाणानाम्, बौद्धस्य, निरालम्बनवादस्य च साधु निरूपणं कृतम् । अन्येऽप्यसंख्या अत्युपयुक्ता विषया अत्र वर्तन्ते । व्याख्यानकर्ताऽतिप्रसिद्धो मीमांसकश्रेष्ठः शास्त्रदीपिकाग्रन्थकर्ता पार्थसारथिमिश्र एवेति किमनयोर्ग्रन्थयोर्विषये बहु कथनीयम् । रु० १५–०

२ भाट्टचिन्तामणिः । महामहोपाध्यायश्रीगागाभट्टेतिप्रसिद्धश्रीविश्वेश्वरभट्टविरचितः । श्रीसूर्यनारायणशुक्लकृतमयूखव्याख्यासनाथः । प्रथमाध्यायस्य द्वितीयपादनारभ्य समाप्ति पर्यन्तः । ( यन्त्रस्थ )

३ न्यायरत्नमाला—श्रीमत्पार्थसारथिमिश्रविनिर्मिता संपूर्णा । अस्यां वर्तमानानि प्रकरणानि यथा–प्रयुक्तितिलकः (अध्ययनविधिचर्चा), स्वतःप्रामाण्यनिर्णयः । अङ्गनिर्णये पञ्च परिच्छेदा वर्तन्ते । इयं न्यायरत्नमाला अनुष्टुप्श्लोकैस्तद्व्याख्यानेन च गर्भिता अस्याः प्रणेता शास्त्रदीपिकाकार एव । रु० ३–०

४ विधिरसायनम्—श्रीमदप्पय्यदीक्षितविरचितं सम्पूर्णम् । मीमांसाशास्त्रानुसारी ग्रन्थः । अस्मिन् अपूर्वविधिलक्षणाक्षेपः नियमविधिलक्षणाक्षेपः, परिसंख्याविधिलक्षणाक्षेपः, अपूर्वविधिनियमपरिसंख्योदाहरणाक्षेपसमाधानेत्येतेंऽशा सुष्ठु निरूपिताः । रु० ३—०

५ न्यायसुधा–इयं तन्त्रवार्तिकव्याख्या श्रीमद्भट्टसोमेश्वरकृता । प्रथमाध्यायद्वितीयपादमारभ्य तृतीयाध्यायसप्तमाष्टमपादपर्यन्तं मुद्रिता । रु० २४–०

६ मीमांसाबालप्रकाशः–सूत्रद्वादशाध्यायानां प्रतिपाद्यनिरूपको ग्रन्थः सम्पूर्णः श्रीभट्टशङ्करविरचितः । अत्र प्रसङ्गवशादन्येऽपि बहवोंऽशा विचारिताः । लघुनाऽनेन पुस्तकेन ज्ञातेन मीमांसायाः प्रमेयपरिज्ञानं समीचीनं भवति । रु० ३–०

७ प्रकरणपञ्चिका—महामहोपाध्याय श्रीशालिकनाथमिश्रविरचिता । प्रभाकरमतानुसारि मीमांसादर्शनं, सम्पूर्णम् । अद्यावधिप्रभाकरमतानुयायी कोऽपि मीमांसाग्रन्थो नोपलब्धः । तस्मादयं प्रभाकरशिष्येण प्रणीतो ग्रन्थ एव प्रभाकरमतकौतुकिनां शरणम् । अत्र च शास्त्रमुखम्, नीतिपथः, जातिनिर्णयः नयवीथी, प्रमाणपारायणम्, अमृतकला, निर्मलाञ्जनम्, तत्त्वालोकः, न्यायशुद्धिः, ( शब्दनित्यत्वनिर्वचनम् ) मीमांसाजीवरक्षा, वाक्यार्थमातृका, विषयकरणीयम्, अङ्गपारायणम्, अतिदेशपारायणम् इति प्रकरणानि वर्तन्ते । तथा–*मीमांसासारसङ्ग्रहः–श्रीशङ्करभट्टकृतः । संपूर्णः । अत्र मीमांसायां तत्तदधिकरणगतप्रधानविषयाः कथिताः । अयमतिसंक्षेपेण सर्वाण्यधिकरणानि गर्भीकरोति । अयं ग्रन्थो मीमांसाशास्त्रस्य विषयसूचनिकेति वक्तुं शक्यते अयं सार्द्धश्लोकशतद्वय–( २५० )

परिमितो ग्रन्थः। (प्रकरणपञ्चिकापरिपूरणम्।) पूर्वं मुद्रिते पुस्तके मीमांसाजी- वरक्षा वाक्यार्थमातृकावृत्तिश्चेति प्रकरणद्वयं खण्डितमासीत् तदधुना परमपरिश्र- मेण सम्पाद्य मुद्रितम्। रु० ५—०

८ शास्त्रदीपिका। मीमांसाधुरन्धरश्रीपार्थसारथिमिश्रप्रणीता। पण्डितप्रवरराम- कृष्णविरचितयुक्तिस्नेहप्रपूरण्याख्यव्याख्यया सहिता। तर्कपादः। रु० १—८

९ पूर्वमीमांसाधिकरणकौमुदी—महामहोपाध्यायपण्डितरामकृष्णभट्टाचार्य विरचिता धर्मशास्त्रादिप्रसिद्ध पूर्वमीमांसाधिकरणानां प्रकाशिका संपूर्ण। रु० १—८

१० मीमांसान्यायप्रकाश—श्रीमदापदेवविरचितः श्रीअनन्तदेवविरचितया भाट्टालङ्का- राख्य व्याख्या सहितः संपूर्णः। रु० ०-६

११ मीमांसाकौस्तुभः। श्रीखण्डदेवविरचितः

(१) प्रथमाध्यायस्य द्वितीयपादः। रु० ७-८

(२) प्रथमाध्यायस्य तृतीयचतुर्थपादौ। रु० ४-८

(३) द्वितीयाध्यायस्य तृतीयचतुर्थपादौ, तृतीयाध्यायस्य प्रथमद्वितीयपादौ। ६-०

१२ मीमांसानुक्रमणिका। श्रीमण्डनमिश्रकृता। महामहोपाध्याय गङ्गानाथ शर्मणा मैथिलेन रचितेन मीमांसामण्डनेन मण्डिता। अस्या अध्ययनेन अधिकरणन्याय- मालायां शीघ्रतया प्रवेशो भवति मीमांसाध्येतॄणां प्रथमतः प्रवेशे महदु- पयोगिनी। रु० ७—८

१३ बृहती। प्रभाकरमिश्रविरचिता [ शाबरभाष्यव्याख्या ] म. म. मिश्रशालिक- नाथविरचितया "ऋजुविमलया" विभूषिता। रु० ४-८

१४ तन्त्रवार्तिकविशेषःटुप्टीका। श्रीमत्कुमारिलभट्टपाद विरचितम्। श्री शबरस्वा- मिभाष्य चतुर्थाध्यायप्रथमपादाद्द्वादशाध्यायपर्यन्तं व्याख्यानरूपम्। रु० ६-०

१५ मीमांसान्यायप्रकाशः [ आपदेवीयः ] श्रीचिन्नस्वामिशास्त्रिकृतया सारविवेचिनी- व्याख्यासहितः। रु० २—०

१६ अर्थसंग्रहः। पूर्वमीमांसासारसंग्रहरूपः। श्रीलौगाक्षिभास्करविरचितः। श्रीमत्प- रमहंसपरिव्राजकाचार्य श्रीरामेश्वरशिष्ययोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्य- व्याख्यासहितः। रु० ०-१४

१७ मीमांसादर्शनम्। श्रीशबरस्वामिविरचितभाष्यसहितम् संपूर्णम्। रु० १०-०

१८ मीमांसापरिभाषा। श्रीकृष्णयज्वकृता। म० म० पर्वतीयनित्यानन्दपन्तविरचितया लघुटिप्पण्या सहिता। मूल्य ०-२

सर्वविधपुस्तकप्राप्तिस्थानम्—

## जयकृष्णदास हरिदास गुप्तः—

### चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस बनारस सिटी।

January 1917.

Registered According to Act XXV of 1867.

THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

NO. 229.

# पूर्वमीमांसा-

## अधिकरणकौमुदी ।

श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्य-
विरचिता
नेने-इत्युपाह्वगोपालशास्त्रिणा परिशिष्टाधिकरणानि-
रूपणपूर्वकं टिप्पण्या परिष्कृत्य संशोधिता ।

सा च-
बाबू हरिदासात्मजेन जयकृष्णदासगुप्तेन
स्वीये विद्याविलासनाम्नि यन्त्रालये
संमुद्र्य प्रकाशिता ।

# PURVAMÎMÂMSÂ

## ADHÎKARANAKOUMUDI

By Mahàmahopàdhyàya Pandit Ramkrishna
Bhttachàrya.
Edited by Pandit Gopal Sastri Nene.

FASCICULUS १-२

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHMBA SANSKRIT SERIES OFFICE BENARES
AGENTS -
OTTO HARRASSOWITZ, LEIPZIG.
PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY.
PROBSTHAIN & CO, BOOKSELLERS, LONDON
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press.*
BENARES.

*Price Rupee one.*

॥ श्रीः ॥

—:०:—

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ॥
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ॥
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तवकः—२२९

१ अस्या चौखम्बा— संस्कृतग्रन्थमालाया प्रतिमासं पृष्ठशतके सुन्दरैः सीसकाक्षरैरुत्तमेषु पत्रेषु एकः स्तवको मुद्रयित्वा प्रकाश्यते । एकस्मिन स्तवके एक एव ग्रन्थो मुद्र्यते ।

२ प्राचीना दुर्लभाश्चामुद्रिता मीमासावेदान्तादिदर्शनव्याकरणधर्मशास्त्रसाहित्यपुराणादिग्रन्था एवाऽत्र सुपरिष्कृत्य मुद्र्यन्ते ।

३ काशिकराजकीयप्रधानसंस्कृतपाठशालाऽध्यापका पण्डिता अन्ये च शास्त्रदृष्टयो विद्वास एतत्परिशोधनादिकार्यकारिणो भवन्ति ।

४ भारतवर्षीयैः,ब्रह्मदेशीयैः,सिंहलद्वीपवासिभिश्चैतद्ग्राहकैर्देयं वार्षिकमग्रिम मूल्यम्—मुद्राः ७ आनकाः ८

५ अन्यैर्देयं प्रतिस्तवक ... ... ... ... ... " " १ " ०

६ प्रापणव्ययः पृथग् नास्ति । ... .. . ... ..

---

साम्प्रतं मुद्र्यमाणा ग्रन्थाः—

(१) सस्काररत्नमाला । गोपीनाथभट्टकृता खण्डे ... ... २

(२) शब्दकौस्तुभ । भट्टोजिदीक्षितकृतः १०

(३) श्लोकवार्तिकम् । भट्टकुमारिलविरचितम् पार्थसारथिमिश्रकृतन्यायरत्नाकराख्यया व्याख्यया सहितम् । सम्पूर्णम् । १०

(४) भाष्योपबृंहितं तत्त्वत्रयम् । विशिष्टाद्वैतदर्शनप्रकरणम् । श्रीमल्लोकाचार्यप्रणीतम् । श्रीनारायणतीर्थविरचितभाट्टभाषाप्रकाशसहितं सम्पूर्णम् ( वेदान्तः ) २

(५) करणप्रकाशः । श्रीब्रह्मदेवविरचितः १

(६) भाट्टचिन्तामणि । महामहोपाध्यायश्रीगागाभट्टविरचिता । तर्कपादः(मीमासा) २

(७) न्यायरत्नमाला श्रीपार्थसारथिमिश्रविरचिता सम्पूर्णः ( मीमासा ) २

(८) ब्रह्मसूत्रभाष्यम्—बादरायणप्रणीतवेदान्तसूत्रस्य यतीन्द्रश्रीमद्विज्ञानभिक्षुकृतव्याख्यानम् । सम्पूर्णः । ( वेदान्तः ) ६

(९) स्याद्वादमञ्जरीमल्लिषेणनिर्मिता सम्पूर्णा २

(१०) सिद्धित्रयम्—विशिष्टाद्वैतब्रह्मनिरूपणपरम् श्रीभाष्यकृता परमगुरुभिः श्री ६ श्रीयामुनमुनिभिर्विरचितम् । सम्पूर्णं( वेदान्तः)१

(११) न्यायमकरन्दः । श्रीमदानन्दबोधभट्टारकाचार्यसंगृहीतः । आचार्यचित्सुखमुनिविरचितव्याख्योपेतः ( वेदान्तः ) ४

(१२) विभक्त्यर्थनिर्णयो न्यायानुसारिप्रथमादिसप्तविभक्तिविस्तृतविचाररूपः म० म० श्रीगिरिधरोपाध्यायविरचितः सम्पूर्णः ( न्यायः ) .. . ... ५

(१३) विधिरसायनम् । श्रीअप्पयदीक्षितकृतम् । सम्पूर्णम् ( मीमासा ) . ... २

(१४) न्यायसुधा ( तन्त्रवार्त्तिकटीका ) भट्टसोमेश्वरविरचिता । ( मीमासा ) १६

THE

CHOWKHAMBÂ SANSKṚIT SERIES;

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS

NO. 229.

# पूर्वमीमांसा-

## अधिकरणकौमुदी ।

श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्य-
विरचिता

नेने-इत्युपाह्वगोपालशास्त्रिणा परिशिष्टाधिकरणनि-
रूपणपूर्वकं टिप्पण्या परिष्कृत्य संशोधिता ।

सा च-

बाबू हरिदासात्मजेन जयकृष्णदासगुप्तेन
स्वीये विद्याविलासनाम्नि यन्त्रालये
संमुद्र्य प्रकाशिता ।

# PURVAMÎMÂMSÂ

## ADHÎKARANAKOUMUDI

By Mahàmahopàdhyàya Pandit Ramkrishna
Bhttachàrya.

Edited by Pandit Gopal Sastri Nene.

*PUBLISHED & SOLD BY THE SECRETARY,*

CHOWKHAMBA SANSKRIT SERIES OFFICE. BENARES.

AGENTS.-

OTTO HARRASSOWITZ, LEIPZIG:

PANDITA JYESHTHARAM MUKUNDAJI, BOMBAY:

PROBSTHAIN & CO, BOOKSELLERS, LONDON.

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

1916.

# भूमिका ।

—:०:—

ईश्वरकृपया समाप्तं किल मुद्रणमेतस्य मीमांसाद्वादशलक्षणीसहस्राधिकरणगतधर्मशास्त्राद्युपयुक्ताधिकरणानां संग्राहकस्याधिकरणकौमुद्याख्यस्य ग्रन्थस्य ।

अयं खलु निबन्धो धर्मशास्त्रोपयोगिमीमांसाशास्त्रजिज्ञासूनां तदर्थमधिकरणमालाशास्त्रदीपिकादिबहुग्रन्थान् सप्रयत्नं पठतामपि तेषामतिविस्तृततयाऽभ्यासासौकर्यं पर्यालोच्य तेषामुपकारकरणे कृतमतिभिर्विरचितो महामहोपाध्याय पं० श्रीमद्विद्वद्वररामकृष्णभट्टाचार्यमहाशयैः ।

मीमांसादर्शनाभिलाषिणां धर्मशास्त्रिणां झटित्यर्थबोधकं कश्चिद्ग्रन्थं बहुदिनेभ्यो गवेषयद्भिः काशीस्थराजकीयप्रधानपाठशालातो लब्धव्याकरणाचार्यपदवीकैः श्री १०६ युत पं० नित्यानन्दपन्तैर्गुरुचरणैः प्रेरितेन, विविधसंस्कृतपुस्तकसम्पादनरसिकेन श्रीगोविन्ददासमहाशयेन मिथिलातो महता ऽऽयासेन महामहोपाध्याय पं० श्रीगङ्गानाथ झा डाक्टरमहाशयद्वारा ऽऽनायितमेकं खण्डितमपरं जगन्नाथपुरीस्थगोवर्द्धनमठाल्लब्धमशुद्धप्रायं च पुस्तकं वितरता प्रवर्तितो गुरुजनाज्ञया च मुद्रणे कृतमतिरन्यशुद्धपुस्तकसम्पादने कृतबहुलायासोऽपि हताभिलाषः त्रुटिताक्षरस्थलेषु विषमपदस्थलेषु च समपादयं शाबरभाष्यादिपर्यालोचनया टिप्पणीम् ।

अथास्य मुद्रणे प्रवृत्ते प्रमाणतयोपन्यस्तानि सूत्राणि महर्षिजैमिनिकात्यायनादिसूत्रेष्वपश्यन् तत्रतत्राध्यायाङ्कमददानः 'तानि तात्पर्यार्थकानि' इति सूचयन् क्वचिच्च पाठभेदं दर्शयन् एतत्पर्यालोचिनामवगमसौकर्याय सूत्राणि स्थूलाक्षरैरस्थापयम् ।

धर्मशास्त्रादिषु बहुश उपयुक्तान्यत्र चानुक्तानि कतिपयान्यधिकरणानि तन्त्रवार्तिकादिप्राचीनग्रन्थाशयपरिग्रहेण यथामति न्यरूपयंश्च।

तदेवं महान्तमायासमनुभूय सम्पादितेऽस्मिन् कार्ये मीमांसादर्शनदुरूहतायाः सुप्रसिद्धतया मन्मतेरपाटवेन सीसकाक्षरयोजकदोषेण च सुलभानि स्खलितानि क्षाम्यन्तो गुणैकदृशो दर्शनरसिका, आस्वादयन्तु च मीमांसाधिकरणरचनासुगमशैलीसमुत्थं प्रमोदं, प्रसीदतु च भगवाननेन व्यापारेण सर्वान्तर्यामी श्रीकाशीविश्वेश्वर इति शम् ।

नेने—इत्युपाख्यो
गोपालशर्मा.

# अधिकरणकौमुद्याम् ।

—:○०○:—

## अधिकरणसूचीपत्रम् ।

# शुद्धिपत्रम् ।

| अशुद्ध. | शुद्ध. | पृ० | पं० |
|---|---|---|---|
| करियते | करिष्यते | २ | २४ |
| इष्टत्वम्तु | इष्टन्तु | ४ | २ |
| समृणमये | स मृन्मये | ५ | २२ |
| मृणमय | मृन्मय | ,, | २३ |
| काष्ठपा | काष्ठे पा | ६ | ११ |
| मन्यरं | मन्तरं | ११ | ९ |
| विहितत्वात् | विहितत्वात् | ,, | १० |
| निर्बाहः | निर्वाहः | ,, | १३ |
| बाधका | बोधका | १४ | ९ |
| यदाह | पदाह | १६ | १७ |
| रूप | सूर्य | २३ | ५ |
| मनोहा | मनोता | २४ | ५ |
| तश्चाधि | तस्य चाधि | २७ | ५ |
| चेनत्वेन | चेतनत्वेन | ३४ | २४ |
| बोधना | बोधना | ३७ | १८ |
| अर्थैकत्वे ( इत्यादि ) | समुच्चयो वा ( इत्यादि ) | ४२ | २४ |
| ३—१—६—१२ | १२—४—३—६ | | |
| रदः | दरः | ४४ | ११ |
| नाशकन | नाशकेन | ४६ | १३ |
| तेत्र | तत्र | ५४ | ४ |
| बाधका | बोधका | ७३ | ११ |
| बाधकम् | बोधकम् | ,, | १३ |
| प्रायश्चित | प्रायश्चित्त | ७५ | १८ |
| वैष्णव्याविति | वैष्णव्याविति | ८१ | ८ |
| अर्थैकत्वं | अर्थैकत्वे | ८७ | २१ |



# ॥ अधिकरणकौमुदी ॥

श्रीहनुमते नमः ॥ श्रीगुरुभ्यो नमः ।

श्रीगणेशाय नमः ॥

नन्दसूनुं नमस्कृत्य सर्वलोकेश्वरेश्वरम् ॥
निरूप्यते ऽधिकरणं रामकृष्णेन विश्रुतम् ॥ १ ॥

अधिकृत्य क्रियते ऽर्थविचारो यस्मिंस्तदधिकरणं मीमांसासिद्धान्तः। तस्याङ्गानि पञ्च। यथाऽऽह भट्टः—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
निर्णयश्चेति पञ्चाङ्गं शास्त्रे ऽधिकरणं स्मृतम् ॥

विषयो यमधिकृत्य विचारः। विशयो विप्रतिपत्त्या संशयः। पूर्वस्य वादिनः पक्षो मतं पूर्वपक्षः। वादिनिरासकं वाक्यमुत्तरम्। निरासश्चासदुत्तरेणाप्यप्रतिभस्य वादिनः सम्भवतीत्यत आह—निर्णयश्चेति। प्रमारूप इत्यर्थः।

१ अथ परिषदधिकरणम्—

यथा "सप्तदशावरा ऋद्धिकामा द्वादशाब्दं सत्रमुपासीरन्, य एव यजमानास्त एव ऋत्विजः" इति श्रूयते। सप्तदश अवरे निकृष्टा येषां ते सप्तदशावरा ऋत्विजः, तेन सप्तदशन्यूनकर्तृकं सत्रं न सम्भवति। य एव यजमाना इति। तथाच सर्वैरेव होतव्यमिति पूर्वपक्षे जैमिनिसूत्रम्—(१)"सत्रे वर्य्यो होता

(१) अस्मिन् ग्रन्थे प्रमाणतयोपन्यस्तानि सूत्राणीदानीमुपलब्धेषु महर्षिजैमिनिप्रणीतषोडशाध्यायीसूत्रपाठ—तत्सहितशावरभाष्याधिकरणमालासूत्रवृत्त्यादिपुस्तकेषु नोपलभ्यन्ते। अतः कुत्र-

अन्येषामर्पणम्" इति । अस्यार्थः—सत्रे स्वीयस्वीयद्रव्याणि मिश्रणेन साधारणानि कृत्वा सर्वे मुख्यं होतारं कृत्वा ऽन्ये ब्रह्मत्वमध्वर्युत्वादीनि ऋत्विक्कर्माणि कुर्युः । साधारणद्रव्येषु सर्वेषां स्वत्वेन देवोद्देश्यकत्यागात् (१)यजमानत्वमिति । किन्त्वत्राऽऽनतिकरी दक्षिणा नास्ति । सर्वेषां यजमानत्वात् । स्वोद्देश्यक(२)त्यागासम्भवात् । तिर्यगधिकरणविरोधात् अ० ६ पा० १ अधि० २ । आनतिः प्रीतिः । तथाच स्वत एव स्वस्मिन्प्रीतिरस्ति । नचैकेनान्यस्मै दक्षिणा दीयतामिति वाच्यम् । सत्रस्यैककर्मत्वेनैक एव दक्षिणोत्सर्गः, ज्योतिष्टोमे षोडशर्त्विज उद्दिश्य गोशतदक्षिणोत्सर्गवत् । अत्र सर्वेषामृत्विक्त्वेन स्वोद्देश्यकत्वस्यासम्भवात् । श्राद्धादौ वाचनिको दक्षिणाभेदः । नचोदासीनाय दीयतामिति वाच्यम् । तर्हि नानतिकरी दक्षिणा, तस्यानृत्विक्त्वात् । अदृष्टार्था दक्षिणा तु वाचनिकी । वचनन्त्वत्र नास्त्येवेति सत्रे दक्षिणाभाव एवेति । अत्र च फलस्य न परिषद्वृत्तित्वम् बहुत्वविशिष्टस्याचेतनत्वात् । किन्तु प्रत्येकवृत्तित्वमिति । तथाच फलस्य बहुत्वमेवान्यथाऽनुपपत्तेः । तदुक्तं—"सर्वतो बलवती ह्यन्यथाऽनुपपत्तिः" इति ।

## २ अथ रात्रिसत्राधिकरणम्—

"प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इति श्रूयते । प्रतिर्वीप्सायाम् । पुनः पुनर्देहावच्छेदेन तिष्ठन्तीत्यर्थः । चिरंजीविनो भवन्तीति यावत् । एता रात्रीरिति प्रकरणात् । अधिकार्थे उप । यन्तीति इण् धातोः । तथाच अधि-

---

त्यानीति न ज्ञायते । क्वचित्तु पाठभेदेन दृश्यन्ते । स च तत्र तत्र स्पष्टीकरिष्यते ।

(१) यागजन्यफलभागित्वमित्यर्थः । (२) स्वमुद्दिश्येति वा पाठः ।

कं ध्यायन्तीत्यर्थः। यागे उद्देश्यदेवताध्यानस्य विहितत्वात्। अत्र चास्याः श्रुतेरर्थवादत्वेन प्रतिष्ठाफलं न ग्राह्यम्। किं तु विश्वजिन्न्यायेन स्वर्ग एव फलमिति पूर्वपक्षे सूत्रम्-"फलं मान्निधिकम्" अ०४पा०३सू१८ इति(१)। अस्यार्थः-यद्यत्सान्निहितं श्रुतं तदेव फलं ग्राह्यम्। तत्राऽऽदौ विधिश्रुतम्, तत आर्थवादिकम्, तदभावे आनुषङ्गिकम्, तदभावे लिङ्गस्थमिति। अत्र यथापूर्वं सन्निहितं बोध्यम्। तथाच रात्रिसत्रे विध्यभावेनाऽऽर्थवादिकं प्रतिष्ठाख्यं फलमेव ग्राह्यम्। विश्वजित्स्थले तु फलं न श्रुतं किन्तु कल्प्यमिति तस्य दुर्बलत्वम्।

आनुषङ्गिकं यथा-"आरोग्यकामः सौरेण यजेत" इत्यनन्तरं "आश्विनौ यजेत" इति श्रूयते। तत्राप्यनुषङ्गा(२)दारोग्यं फलम्। नचानुषङ्गे तत्पदस्याऽऽवृत्तिरिति वाच्यम्। आवृत्तौ हि तादृशपदान्तरकल्पनम्, अनुषङ्गे तु तत्पदस्य परवाक्ये समभिव्याहारकल्पनमिति। अयमेवानुषङ्गिकाधिकरणन्यायः। अ० २ पा० १ अधि० २६। अन्वयबोधस्तु क्रमिकः। अतो वाक्यभेद एवेति। अत्र चैकसाधनावरुद्धे साधनान्तरस्य निराकाङ्क्षितत्वेन विकल्पः कल्प्यते। सौरेण वाऽऽश्विनयागेन वा आरोग्यमिति। सौरस्य बहङ्गकत्वेन तदसामर्थ्ये आश्विनयाग इति व्यवस्थितो विकल्प इति।

लिङ्गस्थं फलं यथा-लिङ्गं मन्त्रः(३)। "ऐन्द्रं यजेत" इत्यत्र यागे मन्त्रः श्रूयते "इन्द्रो देवः सहस्राक्ष ऐन्द्रदस्तस्मै जुहोमि" इति। अतैन्द्रद इति श्रवणादैन्द्रपदं फलमिति।

### ३ अथ विश्वजिदधिकरणम्-

(१) "फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्" इति पाठः।
(२) अनुषङ्गः सामीप्यम्। (३) लिङ्ग्यते ज्ञाप्यतेऽनेनेतिव्युत्पत्तेः।

"विश्वजिता यजेत" इति श्रुत्येष्टसाधनत्वं बोधितम् । इष्टत्वन्तु कल्प्यम् । उक्तचतुर्विधफलासम्भवात् । तत्र च ग्रामधनादीनां गौणपुरुषार्थत्वाद्विनिगमनाविरहाच्च न फलत्वम् । मोक्षस्य च तत्त्वज्ञानमात्रसाध्यत्वात्, तत्र ज्ञानस्य च गौणप्रयोजनत्वात्, प्रतियोगिनिरूप्यतया मोक्षस्याभावरूपस्यानुपस्थितेश्चेति, स्वर्गस्याप्यनुपस्थित्या फलत्वेन कल्पने मानाभावादित्यत्र सूत्रम्– "स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्" अ० ४ पा० ३ सू० १५ इति । देशात्मकस्वर्गवारणाय स इति । दुःखासम्भिन्नादिरूप(१) इत्यर्थः । सर्वानिति । वैराग्यरहितानिति शेषः । अविशिष्ट इति–इच्छाज्ञानविषयत्वेन । तथाच ज्ञानं विना इच्छाया असम्भवात् स्वर्गस्योपस्थितिरस्त्येवेति फलं स्वर्ग एव ।

ननु विश्वजयिनो विश्वजिद्यागो नित्य एवास्तु फलाश्रवणात्, कार्तिकामावास्यायामुल्कादानलक्ष्मीपूजनवत्, इति चेन्नैवम् । विश्वजित्सर्वजिद्बहुसुवर्णकराजसूयादिसर्वमेधान्तानां षोडशानामेव विश्वजयिकर्तव्यत्वेन बोधनात् । तथाच विश्वजितो नित्यत्वेन प्रथमकर्तव्यत्वात् तत्र च सर्वस्वदक्षिणया सर्वजिदादिषु धनाभावेनाप्रवृत्त्या तद्विधेरननुष्ठानलक्षणाप्रामाण्यं स्यात् । अतो विश्वजिद्यागो न नित्यः । सर्वजिदादीनान्तु फलश्रुत्या काम्यतैवेति ।

### ४ अथ सर्वस्वदाक्षिण्याधिकरणम्–

"उद्गातृपूर्वान् विश्वजिति, प्रतिप्रस्थातृपूर्वान् सर्वजि-

(१) यन्न दुःखेन सम्भिन्नं नच ग्रस्तमनन्तरम् ॥ अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम् । इति तन्त्रवार्तिकोक्तः स्वर्ग इति यावत् ।

दादौ, सर्वमेधे तूभयम्" इतिश्रुत्या विश्वजित्युद्गातृप्रधानाः षोडशर्त्विजः, सर्वजिदादौ प्रतिप्रस्थातृप्रधानाः षोडश, सर्वमेधे तूद्गातृप्रधानाः प्रतिप्रस्थातृप्रधानाश्च । तेनात्र गणद्वयेन द्वात्रिंशदृत्विजो भवन्ति । तथा च "उद्गातृभ्यः सर्वस्वं दाक्षिण्यं, प्रतिप्रस्थातृभ्यो न" इति श्रूयते । उद्गातृभ्य उद्गात्रादिभ्यः । तेन विश्वजिति सर्वस्वदक्षिणा, सर्वजिदादिषु यत्किञ्चित् पारितोषिकं, सर्वमेधे तु सर्वस्वं यत्किञ्चिच्चेति ।

न च सर्वस्वे दत्ते यत्किञ्चिदिति कथं स्यादिति वाच्यम् । सर्वस्वपदेन सर्वं तैजसमुक्तं(१) भूमिवस्त्रादिकं च न सर्वस्वाभ्यन्तरीणम् ।

५ अथ होलाकाधिकरणम्—

प्राच्यानां होलाकाऽऽचारदर्शनात्तदर्थं 'होलाका ऽऽचरणीया' इति सामान्यविधिः कल्प्यते । न च प्रतीच्यानामनाचरणात्प्राच्यैरिति विशेषणपदं देयम् । सामान्यविधिनैव प्राच्याऽऽचारोपपत्तेः । प्रतीच्यानामनाचरणस्येच्छाविरहेणैवोपपत्तेः । इच्छाविरहश्च तद्देशीयपूर्वपूर्वाणामनाचारदर्शनात्, प्रतीच्यानामुल्कादानाद्याचारविरहवत् । नह्यनाचारार्थं वेदः(२) कल्प्यते । तथा च यत्र सामान्यश्रुत्या उपपत्तिस्तत्र विशेषविधिर्न कल्प्यते, 'गुरुरनुगन्तव्यः सदा' इतिवत् । नहि कर्मकाले तदसम्भवात्तदन्यकाले इति तत्र विशेषणीयमिति ।

६ अथ फलचमसाधिकरणम्—

---

(१) अत एव रघुकाव्ये "सम्मृण्मये वीतहिरण्मयत्वात्' इति । अन्यथा मृण्मयमपि कथं तस्य । हिरण्मयं तैजसम् ।

(२) श्रुतिरिति पाठः ।

"प्रोद्गातॄणां फलचमसं हुतशेषं भक्ष्यं ददाति" इति श्रूयते । प्रोद्गातॄणामिति बहुवचनात् प्रोद्गात्रादिऋत्विजां सर्वेषामित्यर्थः ।

यवव्रीहितिलैर्मुद्गैः साधितश्चमसः स्मृतः ॥

फलं नारिकेलं "अनादेशे नारिकेलं फलम्" इति श्रुतेः । तथा च फलसहितश्चमस इत्यर्थः । हुतशेषमिति । तेन होमेऽपि तद्द्रव्यमिति ।

७ अथ सर्वपिष्टाधिकरणम्—

"सर्वपिष्टं मिथुनेन पेषणीयम्" इति श्रूयते । अत्र मिथुनशब्दस्य सपुत्रपाषाणे न लक्षणा । तथा च मिथुनपदेन स्त्रीपुंसावित्युक्तौ । पेषणन्तु यत्र तत्र काष्ठपाषाणादौ वा कर्तव्यमिति पूर्वपक्षे जैमिनिसूत्रम्—"निरूढत्वात्" इति । निरूढलक्षणा शक्तितुल्या, शक्तिवत्तस्या अपि झटित्युपस्थापकत्वात् । मिथुनपदस्य सपुत्रपाषाणे निरूढलक्षणा । तेन सपुत्रपाषाण एव पेषणम् । अन्यथा कुत्र पेषणीयमित्यनध्यवसायेन प्रवृत्तिर्न स्यात् । पेषणे स्त्रिया अप्यन्वये गौरवञ्च स्यादिति ।

८ अथ हविरुभयत्वाधिकरणम्—

पुत्रेष्टियागे श्रुतिः "व्रीहिभिर्यवैश्च प्राजापत्यं पृथक् श्रपयेत्, हविषी संस्कुरुते, आज्येन प्रोक्ष्यावहत्य कपिलाक्षीरेण पचेत्" इति । आज्येनेतिविशेषश्रुतेः सामान्यविधिप्राप्तस्य जलेन प्रोक्षणस्य बाधः । हविषी व्रीहियवौ । अथास्य विकृतौ पुत्रेष्टियागान्तरे श्रुतिः "यवमयश्चरुर्भवति" इति । अत्र च 'प्रकृतिवद्विकृतिः' इतिन्यायेन सर्वधर्मप्राप्तावपि न संस्कारप्राप्तिः । प्रकृतौ हविषी इतिश्रवणात् द्वित्वविशिष्टस्य संस्कारप्राप्तेः ।

अत्र च यत्रमात्रश्रवणे द्वित्वविशिष्टहविषोऽभावात् तत्प्राप्त्यभाव इत्याऽऽक्षेपेन नात्र प्रोक्षणं, किन्तु सामान्यप्राप्तजलेनैवेत्यत्र सिद्धान्तसूत्रम्—"द्वित्वमनपेक्षितमप्रधानत्वात्" इति। शाब्दबोधे विधेयं प्रधानम्, उद्देश्यमप्रधानम्। तेनात्रोद्देश्यगतत्वाद्वित्वं हविर्गतं लिङ्गञ्च नपुंसकमविवक्षितमिति।

## ९ अथ ग्रहैकत्वाधिकरणम्—

"ग्रहं संमार्ष्टि" इति श्रूयते। गृह्यते हविरनेनेति ग्रहो यज्ञपात्रम्। स्रुक्स्रुवादयः। "ग्रहैर्जुहोति" "दश ग्रहान् गृह्णाति" इति। तथा च ग्रहमित्येकवचनेनैकपात्रस्य मार्जनप्राप्तौ कस्येत्यनध्यवसायादप्रवृत्त्यापत्तिरिति। अत्र सूत्रम्—"सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम्" अ० ३ पा० १ सू० १४ इति। असंस्कृतेन पात्रेण यज्ञनिषेधात्सर्वेषामेव मार्जनमपेक्षितम्। तेनात्रैकत्वमविवक्षितम्। न च हविरुभयत्वाधिकरणेनेदमन्यथासिद्धम्। तत्र द्वित्वस्यान्वयबोधेऽप्रवेशात्। अत्र चैकत्वस्यावच्छेदकत्वेनानन्वयेऽपि सामानाधिकरण्येनान्वये प्रवेशादिति।

## १० अथ तदर्थशास्त्राधिकरणम्—

बार्हस्पत्ययागे श्रूयते "प्रयाजं करोति नानुयाजम्" इति। अत्र नानुयाजमिति श्रवणान्निषेधानुपपत्त्या दर्शधर्मातिदेशः पश्चाद्भाव्यः। तथा च "अनुवादः प्राप्तबोधो विधिरप्राप्तबोधकः" इति सूत्रे ऽप्राप्तेति निष्ठाप्रत्ययश्रुतेः पश्चात्प्राप्त्यभावेऽपि प्रयाजे न विधित्वहानिः। पूर्ववाक्यस्य "प्रयाजं करोति" इति वाक्यस्य सार्थकत्वादादौ प्रयाजाचरणं ततोऽनुयाजं विहायातिदेशप्राप्त्याश्चतस्र आहुतयः कर्तव्या इति नात्र षडाहुतय इति पूर्वपक्षे सिद्धान्तसूत्रम्—"तदर्थशास्त्रे निष्ठाया अनिष्ठितत्वात्"

इति। स विधिरर्थो ऽभिधेयो यस्य तत्तदर्थशास्त्रम् 'अप्राप्तप्रापको विधिः' इतिसूत्रम्। तत्र निष्ठाप्रत्ययस्यानिष्ठितत्वादविवक्षणादि-त्यर्थः। तेन मानान्तरेण प्राप्तयविषयबोधको विधिः। अत्र च प्राप्तव्यत्वेन प्राप्तिविषयत्वात् प्रयाजं करोतीति न विधिः। कि-न्त्वनुयाजस्थाने एव प्रयाजान्तरविधिः। तेनातिदेशप्राप्तव्यस्य प्रयाजस्याऽऽदावाचरणम्, ततो ऽनुयाजस्थले पुनः प्रयाजान्तरा-चरणं, ततश्चतस्र आहुतय इति षडाहुतिसंख्या स्थितेति।

## ११ अथ निषादस्थपत्यधिकरणम्—

"निषादस्थपतिं याजयेत्, स वै शक्त इति स्वयं जुहो-ति" इति श्रुत्या यजमानकर्तृको मन्त्रपाठः प्राप्तः। तथा च नि-षादस्थपतीत्यत्र कर्मधारयसमासे निषादस्य मन्त्रपाठापत्त्या वि-द्याप्रयुक्त्यापत्तिः। निषिद्धस्य पाठनं विद्याप्रयुक्तिः। तथा च निषादः स्थपतिर्यस्येति बहुव्रीहिः, निषादस्य स्थपतिरिति षष्ठीतत्पु-रुषसमासो वा ऽऽश्रयणीयः। तेन त्रैवर्णिकस्यैवम्भूतस्य याजन-मिति न विद्याप्रयुक्तिरिति। अत्र सिद्धान्तसूत्रम्—"झटित्युप-स्थापकत्वात्" अ० ६ पा० १ सू० ५१ इति(१)। बहुव्रीहिषष्ठी-तत्पुरुषसमासयोर्लाक्षणिकत्वेनानुपपत्त्यधीनतया विलम्बोपस्थाप-कत्वात्। कर्मधारयस्य तदभावेन शीघ्रोपस्थापकत्वात् तेनैवान्व-यबोधः। फलमुखत्वाद्विद्याप्रयुक्तिर्न दोषायेति॥

## १२ अथ रथकाराधिकरणम्-

"वर्षासु रथकार आदधीत" इत्याधानाख्यं कर्म रथ-कारस्य विधीयते। अत्र योगार्थाऽऽदरे त्रैवर्णिकपरत्वं सम्भ-वदपि लाघवाद्रूढस्य जातिविशेषस्यैव ग्रहणम्। यथा—

(१) "शब्दसामर्थ्यात्" इति सूत्रपाठे।

'माहिष्येण करिण्यां तु रथकारः प्रजायते' इति।

योगार्थस्य तु रूढ्यर्थतो गौरवम् । अनेकपदार्थान्वयानन्तरमुपस्थापकत्वादिति । तेन याजनं विना आधानकरणासम्भवात् रथकारस्य ब्राह्मणेन याजनसिद्धिरिति ॥

१३ अथ(१) तन्त्रन्यायः—

"असंस्कर्ता पिता बालहा भवति यथासमयम्, तदकरणे क्षामवत्या यजेत, ततश्च संस्करोति" इति श्रुतेः मुख्यकाले जातेष्ट्यादेरकरणे तज्जन्यप्रत्यवायनाशाय क्षामवतीमिष्टिं कृत्वा गौणकालेऽपि संस्कारान् जातेष्ट्यादीन् कुर्यादिति सिद्धम्। तत्र यदि बहुसंस्काराकरणं तदा बहुप्रत्यवायोत्पत्तेः प्रत्येकदोषनाशाय पृथक् क्षामवतीं कुर्यात्। एकया क्षामवत्याऽनेकप्रत्यवायनाशासम्भवात्। प्रत्येकविघ्ननाशाय भिन्नमङ्गलवत्, इत्यत्र सिद्धान्त सूत्रम्—"तन्त्रवत्"इति । यथा तन्त्रस्य दीर्घसूत्रसमुदायमध्ये सर्वसूत्रमुद्दिश्य कृतेन एकेन विस्तरसूत्रप्रक्षेपेण सर्वसूत्रसम्बन्धो, न तु यावन्ति दीर्घसूत्राणि तन्मध्ये प्रत्येकं प्रस्तारसूत्रप्रक्षेपः कुविन्देन क्रियते, तथा एकया क्षामवत्या सर्वमुद्दिश्य कृतया सर्वदोषसम्बन्धात् सर्वेषामेव नाशः । नाशकस्य नाश्यसम्बन्धे सति नाशे ऽन्यानपेक्षणादिति ।

एवं दर्शे प्रयाजादिषण्णामङ्गत्वं श्रूयते । दर्शयागश्चाऽऽहुतित्रयरूपः। तथाच तन्त्रन्यायेन सकृत्कृतेन प्रयाजादिनाऽदृष्टनिष्पत्तिर्न तु प्रयाजादीनां त्रिधा आवृत्तिरिति । प्रयोगविध्यैक्ये तन्त्रता । प्रयोगविधिश्च एभिरङ्गैरिदं कर्तव्यमेवंरूपः । तेन समानाङ्गत्वेनैव तन्त्रता । तथाच देवतैक्ये तन्त्रता। कृ-

१ नानाफलकसमानाकारकव्यापाराणां मध्ये नानाफलान्युद्दिश्यैकव्यापारकरणं तन्त्रम्।

चिद् द्रव्यैक्येऽपि। किन्तु काम्ययार्न तन्त्रतेति । नित्ययोर्नित्यकाम्ययोरङ्गयोश्च तन्त्रता । क्षामवत्याः प्रायश्चित्तरूपत्वेनावश्यकर्तव्यत्वात् । "चरितव्यमतो नित्यं प्रायश्चित्तं विशुद्धये" इतिवाचनिकनित्यत्वात् । काम्यानां तन्त्रत्वे यजमानद्वयस्य शिवलिङ्गसहस्रद्वयसंकल्पे एकसहस्रपूजनेनैव निर्वाहः स्यादिति । अयमेव क्षामवतीष्टिन्यायः ।

१४ अथ (१)प्रसङ्गन्यायः—

"पशुं प्रोक्ष्य, तन्मांसैर्जुहुयात्" इति श्रुतिः । अत्र पशुप्रोक्षणेन न मांसस्य प्रोक्षणं सिद्ध्यति, तस्य ततोऽन्यत्वादिति मांसमपि प्रोक्षयेदित्यत्र सिद्धान्तसूत्रम्—"प्रसङ्गात्सिद्धेः" इति । प्रसङ्गो नान्तरीयकत्वम् । तथाच पशुप्रोक्षणेन समन्त्रकेणामन्त्रकं पुरोडाशस्य तन्मांसस्य च प्रोक्षणमपि सिद्धं, तत्र जलसम्बन्धाभावेऽपि पशुघटकत्वेन पुरोडाशस्यापि संस्कारो धान्यराशेरुपरि प्रोक्षणेनाधोवर्तिधान्यानामपि सर्वेषां तद्घटकत्वेन प्रोक्षणवत् ॥

'होम्यं यत्काठिनं स्यात्तु पुरोडाश इति स्मृतम्, इति ।

तेन मांस-पिष्टकमोदकादीनां होमे विहितानां पुरोडाशसंज्ञेति । तेन समानाङ्कके उद्दिश्य कृते तन्त्रन्यायः । अधिकाङ्केन न्यूनाङ्गसिद्धौ प्रसङ्गन्यायः । अत्र कुत्रचिदुद्देश्यस्य सिद्धिः, क्वचिदनुद्देश्यस्यापि ।

आद्यं यथा—आज्यसंस्कारस्य तद्यागोपयुक्तसर्वाऽऽज्यमुद्दिश्य करणात् कलशस्थाऽऽज्यस्यापि शुद्धिः। नहि राजसूयादियागोपयुक्तं सर्वमाज्यं (२)पात्रे स्थातुमर्हति । नच यदाज्यं ग्राह्यं तद-

१ अन्योद्देशेनान्यदीयस्यापि सहानुष्ठानं प्रसङ्गः ।

२ आज्यस्थाल्यामित्यर्थः ।

पि संस्कार्यं, तत्समयस्य कुशण्डिकान्तर्गतत्वेनातीतत्वात् । एवं संस्कृतस्रुवापचारे नवीनस्रुवे संस्काराभावः ।

द्वितीयं यथा—अधिकपापप्रायश्चित्तेन क्षुद्रपापनाशस्यानुद्देश्यस्यापि सिद्धिः । वृश्चिकनाशाय पाषाणक्षेपे पिपीलिकादिनाशवत् । माधवीये तु पशुयागार्थं प्रयाजाद्यनुष्ठाने कृते पुरोडाशार्थं न पुनः प्रयाजाद्यनुष्ठानं प्रसङ्गेनोभयाङ्गानुष्ठानादित्युक्तम् ।

१५ अथाङ्गस्य प्रधानाऽऽवृत्त्यप्रयोजकत्वन्यायः—

प्रधाननिष्पत्त्यनन्तरं चरोरपचारे ऽङ्गभूतस्विष्टकृद्धोमार्थं न पुनः पाकः । तस्य होमशेषद्रव्येण विहितत्वात् । किन्तु चरुं प्रसाध्य पुनः प्रधानाचरणं स्विष्टकृद्धोमार्थं कार्यमित्यत्र सिद्धान्तसूत्रम्—"अङ्गस्य प्रधानाऽऽवृत्त्यप्रयोजकत्वात्" इति । तेन स्विष्टकृद्धोमं विनैव तत्र कर्म्मनिर्वाहः । एवमेकोद्दिष्टादौ न पुनः श्राद्धाऽऽवृत्तिः । शेषाभावपचारे पिण्डार्थं न पाकान्तरं कार्यमिति । एवमपिण्डकेन मघाश्राद्धेन पक्षश्राद्धनिर्वाहः । अत एव छन्दोगपरिशिष्टम्—

"प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः ।
तदङ्गस्याक्रियायां तु नाऽऽवृत्तिर्नापि तत्क्रिया" इति ॥

१६ अथ योगसिद्ध्यधिकरणम्—

"यः पुत्रकामः स इदं कुर्यात्, यः पशुकामः स इदं कुर्यात्" इत्यादि चतुर्दशतिथिग्रामानुक्त्वा "एकैकस्मै कामायान्ये यज्ञक्रतव उपाह्रियन्ते सर्वेभ्यो दर्शपौर्णमासान्" इति श्रुतावुक्तम् । यज्ञक्रतू भिन्नौ ।

"इष्टिस्तु चरुणा यागो यज्ञस्तु पशुना स्मृतः ।
एतच्छेषः क्रतुः प्रोक्तो होमान्यत्पूजनं स्मृतम् ॥

यज्ञोऽपीष्टिरेव यजधातोः सिद्धत्वात् । एतच्च "क्रतुयज्ञेभ्यश्च" इति अ० ४ पा० ३ सू० ६८ पाणिनिसूत्रे उक्तम् । सर्वेभ्य इति । प्रक्रान्तपुत्रादिचतुर्दशफलान्युद्दिश्येत्यर्थः । तथाचैकदैव पुत्रपश्वादिचतुर्दशफलकामनया दर्शपूर्णमासौ कार्याविति पूर्वपक्षे जैमिनिसूत्रम्—"योगसिद्ध्यसम्भवात्" इति । योगः साहित्यम् । तथाचैकस्मात्कर्मणः साहित्येन फलासम्भवादित्यर्थः । अयम्भावः । यः पुत्रकाम इत्यादिप्रक्रमेण प्रत्येकमधिकारित्वश्रुतेः तेषामेवान्वयबोधो युक्तो, नतु समुच्चितफलकामस्याधिकारित्वम् । फलानां समुच्चयस्याश्रवणात् । कल्पनायां मानाभावात् । तथाच प्रयोगभेदात्सर्वं फलं भवति नत्वेकप्रयोगेणेति । अत्र च बाधकाभावे सतीति बोध्यम् । तेन यत्र समुच्चयेन फलश्रुतिस्तत्र न दोषः । यथा "स्वर्गमाप्नोति मोक्षं च कार्तिके केशवार्चनात्"इति । अत्र चकारेण समुच्चयबोधः । एवञ्च महाभारतादिश्रवणस्य बहुफलश्रवणे ऽप्येकं फलमुद्दिश्य सङ्कल्पः कार्यो न तु समुच्चयेन, तद्बोधकाभावादिति ।

१७ अथ कर्मण्यारम्भाधिकरणम्—

नन्वेकस्माद्दण्डाद्यथा बहुघटोत्पत्तिः । तथैकस्मात् ज्योतिष्टोमाद्बहूनि स्वर्गादिकानि फलानि भविष्यन्तीति किमर्थं पुनः पुनरनुष्ठानाचार इति पूर्वपक्षे सिद्धान्तसूत्रम्—"कर्मण्यारम्भावृत्त्या फलावृत्तिः" इति । अयमाशयः । "ज्योतिष्टोमात्षष्टिवर्षसहस्राणि स्वर्गो भवति" इति श्रुतौ षष्टिवर्षसहस्राणीति व्यर्थं स्यात् । फलानामानन्त्यादनिर्मोक्षश्च स्यात् । एकयागफलाविच्छेदाद्यागान्तरफलप्राप्तिश्च न स्यात् । सूत्रार्थस्तु एककर्मविषयकाऽऽरम्भ आद्यः प्रयत्नस्तस्याऽऽवृत्तेर्यावती संख्या ता-

वत्संख्यं फलं भवतीति । आद्यप्रयत्नभेदस्तु कर्मभेदादेव । तथाच प्रधानीभूतादेकस्मात्कर्मण एकमेव भिन्नकालीनं फलं भवतीति । प्रधानीभूतेति प्रयाजादिवारणाय तेषां सकृत्कृतानामेव दर्शत्रयोपकारकत्वात्तत्र त्रयमपि फलं तन्त्रप्रसङ्गाभ्याम् । बहुपापनाशककर्मवारणाय, 'कुलकोटिं समुद्धरेत्' इत्यत्र तत्तदात्मनिष्ठनानाफलोत्पादककर्मवारणाय च भिन्नकालीनेति ।

१८ अथ शंय्वधिकरणम्-

"सोमयाजी ब्रह्मलोकमाप्नोति" इति श्रुत्या सोमयाजिनो ब्रह्मलोकावाप्तिरुक्ता । अत्र च सोमयागस्य हेतुत्वं न सम्भवति कर्तृविशेषणत्वेनोपस्थितत्वात्कुलालत्ववत् । तथाच ब्रह्मलोकप्राप्तिः कस्य फलमुक्तमित्यत्र जैमिनिसूत्रम्-"शंयुवत्तत्त्वसिद्धेः" इति । अयम्भावः । "देवाः शंयुं बार्हस्पत्यमब्रुवन्, त्वमस्माकमविनाशाय हव्यं वह, ततः शंयुमन्तस्ते ऽरीनजयन्" इति श्रूयते । अत्र शंयुविशिष्टदेवानामरिजयहेतुत्वं प्राप्तम् । बाधकाभावाच्च विशिष्टस्य हेतुत्वबोधे विशेषणस्यापि हेतुत्वम् । कुलालत्वस्य तु न तथा स्वतन्त्रान्वयव्यतिरेकाभावात् । शंयोस्तु तत्सत्त्वाद्धेतुत्वबोधविषयीभूतदेवविशेषणत्वेऽपि हेतुत्वमिति । श्रुत्यर्थस्तु-बृहस्पतिपुत्रं शंयुं देवा अब्रुवन् हव्यं शत्रुनाशकं यागं वह कुरु ततस्तद्यागानन्तरमित्यर्थः । तथा च शंयोः साक्षाज्जनकत्वाभावाद्यथा यागो व्यापारः तथा सोमयागस्यापि अपूर्वं व्यापारः(१) । एवं "सप्तदश पशूनालभेत" इत्यत्र सप्तदशत्वविशिष्टपशूनामङ्गत्वबोधनात् सप्तदशत्वमप्यङ्गमिति ॥

१९ अथ देवताऽधिकरणम्—

(१) तज्जन्यत्वे सति तज्जन्यजनको व्यापारः ।

ननु देवताप्रीतिरेव यागव्यापारो ऽस्तु किमपूर्वेणेत्यत्र सूत्रम्- "देवता चैतन्यासम्भवात्" इति । चेतने एव प्रीतिर्जायते नत्वचेतने तथा च कथं देवताप्रीतिरिति ।

२० अथ परिषदाधिकरणम्—

"ब्राह्मणेभ्यो ऽन्नं दद्यात्" इति श्रुत्या बहुत्वविशिष्टमेव सम्प्रदानं तथा चैकमेवोत्सर्गवाक्यमत्र सूत्रम्—"परिषदि दत्तमदत्तम्" इति । परिषदो बहुत्वविशिष्टस्याचैतन्येन स्वीकारासम्भवात् प्रत्येकमेव दानवाक्यम् । तुलापुरुषादिदाने च वाचनिकत्वाद्बहुत्वविशिष्टा एवोद्देश्याः । तेन बाधकाभावे सतीति विशेषणं सूत्रे इति ॥

२१ अथ कौण्डपायिनामयनाधिकरणम्—

"उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुयात् तेजस्कामः" इति ।

उपसत् कल्प्यते यत्र सतिलैर्व्रीहिभिश्चरुः ।

तथा च सतिलैर्व्रीहिभिः चरित्वा—चरुं कृत्वा मासं व्याप्याग्निहोत्रं जुहुयादित्यर्थः । अत्र चाग्निहोत्रान्तरविधौ गौरवात् प्राप्ताग्निहोत्रे एव मासव्याप्तोपसद्विधिः । तेन प्रकृताग्निहोत्रमेवोपसदा कर्तव्यम् । अन्यथा प्रकृताग्निहोत्रं कृत्वा ऽग्निहोत्रान्तराऽऽचरणे गौरवं स्यादित्यत्र सिद्धान्तसूत्रम्—"वाक्यभेदापत्तेः" इति(१) । प्रकृताग्निहोत्रमुद्दिश्य मासोपसदुभयगुणविधौ वाक्यभेदापत्तेः ।

नच मासविशिष्टोपसद्विधिः । गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात्" इति न्यायादङ्गानामन्योन्यं विशेष्यविशेषणभावविरहादिति । गु-

---

( १ ) वाक्यभेदस्य च दुष्टत्वमुक्तमभियुक्तैः—

'सम्भवत्येकवाक्यत्वे वाक्यभेदो न युज्यते' इति ।

णानामङ्गानां परार्थत्वादङ्गयर्थत्वादसम्बन्धः परस्परं विशेष्यविशेषणभावविरहः । कुत इत्यत्राऽऽह—समत्वादिति । विनिगमनाविरहादित्यर्थः । तथा च गुणद्रव्यविशिष्टस्याग्निहोत्रान्तरस्यैव विधिः । अग्निहोत्रपदप्रयोगस्तु तद्धर्मप्राप्त्यर्थ इति । कुण्डसम्बन्धित्वात्कौण्डः पिण्डसोमस्तत्पायिनाम् अयनं—कर्तव्यत्वेन ज्ञानं यत्र तत्कौण्डपायिनामयनम् । अलुक्समासात् यागस्य संज्ञा(१) । कृतसोमयागस्य तत्राधिकारात् । केचित्तु कौण्डपायिनां कृतसोमपानानामयनं तदाख्यो यागः । स च द्वादशाहसाध्य इत्यर्थः । षष्ठ्यर्थश्च कर्तृत्वमिति वदन्ति ।

## २२ अथ यागदानहोमाधिकरणम्—

बार्हस्पत्ययागे श्रूयते "शरमयं बर्हिरुत्तरतस्त्यजति, तत्र द्रव्याण्यासादयति" इति । अत्र च त्यक्तद्रव्ये कथं द्रव्याऽऽसादनं त्यक्तस्य विनियोगविरहादित्यत्र सूत्रम्—"**यागदानहोमान्यत्वे त्यागानुपपत्तेः**" इति । अस्यार्थः—या क्रिया यागदानहोमाऽन्या सा न त्यागरूपेति । तथा च शरमयबर्हिषो न त्यागः । तेन त्यजतीत्यस्य स्थापयतीत्यर्थः ।

ननु मुख्यशब्दं विहाय लाक्षणिकस्य त्यजतीत्यस्याभिधानं कथम् ? इत्थं, "देवा गातु इति मन्त्रेण बर्हिषो होममाचरेत्" इति पूर्णाहुत्यनन्तरं बर्हिषो होमविधानादत्र शरस्य बर्हिष्ट्वेन होमप्राप्तौ तद्वारणाय त्यजतीति । तेन त्यक्तधर्मातिदेशात्पुनरनुपादानाच्च न शरस्य होम इति । नचोत्सर्गोऽपि त्याग एवेति कथं त्यागस्य त्रितयान्यतमरूपत्वमिति वाच्यम् । उत्सर्गस्यापि त्यागादिरूपत्वात् । तथाहि—तडागोत्सर्गस्य दैवतोद्देश्यकत्यागत्वेन

---

( १ ) संज्ञास्वरूपभङ्गभिया षष्ठ्या अलुगित्यर्थः ।

यागत्वम् । सर्वसत्त्वानां चतुर्थ्यन्तपदनिर्देश्यत्वेन देवतात्वात् । एवं वृषोत्सर्गस्यापि । तत्रापि वत्सतरीणां देवतात्वात् । एवं मठाद्युत्सर्गस्य साक्षादेव यागत्वम् । एवं मनसा ब्राह्मणमुद्दिश्य त्यागस्य दानत्वमेव स्वीकारार्होद्देश्यकत्यागस्य दानत्वात् । नतु स्वीकारोपहितेति वक्तव्यम् गौरवात् । स्वीकारयोग्यता च विशिष्टचेतनत्वेन । शूद्राद्युद्देश्यकत्यागेऽपि दानपदप्रयोगात् ।

नचैवं वैराग्यादिना द्रव्यमेव द्रव्यत्यागे कथमुपपत्तिरिति वाच्यम् । तत्रोत्सर्गत्वस्याप्यभावेन उभयसमाधेयत्वात् । तथा च स्नानाद्यङ्गकत्यागस्य त्रैविध्यमिति । एवं 'सर्वं परित्यज्य संन्यसेत्' इत्यत्रापि स्नानाद्यङ्गत्वाभाव इति ।

न च होमोऽपि देवतोद्देश्यकत्यागत्वाद्याग एवेति कथं तस्य पृथगुपन्यास इति वाच्यम् । स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वात् । कर्मणो गुणान्तर्भावसम्भवेऽपि पृथगुपन्यासवत् । तथा च यागे ऽन्यानुपहितत्वं विशेषणं देयम् । होमे त्वग्निप्रक्षेपविधिकेति विशेषणमिति सर्वे पूर्वपक्षाः परास्ताः ।

२३ अथ यदाहवनीयन्यायः—

सोमयागे "पदे जुहोति" इति श्रूयते । तस्य चानुपपत्तिः "यज्जुहोति तदाहवनीये" इतिश्रुतेःसामान्यायाःसङ्कोचापत्तेरित्यत्र सिद्धान्तसूत्रम्—"निरवकाशत्वात्" इति। पदे जुहोतीत्यस्य निरवकाशत्वापत्त्या आहवनीयवाक्यस्य सङ्कोच एव युक्तः । तथाच निरवकाशवचनविषयातिरिक्ते सामान्यवचनस्य प्रवृत्तिरिति । एवं ज्योतिष्टोमे "सोमेन यजेत" इति सामान्यश्रुतिरस्ति, तथा "राजन्यवैश्यौ फलचमसाभ्याम्" इति । तत्र विशेषश्रुत्या सामान्यश्रुतेर्ब्राह्मणमात्रपरत्वं नतु राजन्यवैश्ययोर-

पिं सोमसहितफलचमसाभ्यां याग इति ।

२४ अथ पदिन्यायः—

"पद्पांसुना यूपमनक्ति, सप्तमं पदम् गृह्णाति" इति सोमयागे श्रूयते । तत्र कस्य पदं ग्राह्यमिति अनध्यवसाये सूत्रम्—"उपस्थितत्यागायोगात्" इति । प्रकरणादुपस्थितायाः सोमक्रयणार्थमानीताया गोरेव पदपांसुग्राह्यः । तथाच पदित्वेनोपस्थितायास्तस्या एव सप्तमं पदं पांस्वर्थं ग्राह्यमिति । "ऐशानीतः सम्पूज्य गामग्निं परिक्रमयति" इति । अग्निप्रदक्षिणारम्भार्थकप्रथमपदचलनावधि सप्तमत्वं बोध्यमिति । एवं "पदे जुहोति" इत्यत्रापि तदेव सप्तमं बोध्यम् । "वर्त्मनि जुहोति" इत्यत्रापि प्रदक्षिणवर्त्म बोध्यमिति ।

२५ अथ स्फ्याश्लिष्टेज्याधिकरणम्—

"यत स्फ्ये आश्लिष्येत, तदधो मृज्यात, उरुविक्रमाय द्वादशकपालश्चरुं निर्वपेत" इति श्रुतिः ।

'खड्गाकारः खादिरः स्फ्यश्चरोरावर्तनाय सः' ।

यत—यदि अग्निष्टोमे यागे चरोरावर्तने चरुसंश्लेषः स्फ्ये भवेत्, तत—तदाऽधो—भूमिभागं मृज्यात—शोधयेत । तत्र उरुविक्रमाय—विष्णवे द्वादशकपालं चरुं द्वादशाहुत्यर्थं कुर्यात ।

'कपालं मृन्मयं पात्रं चक्राघटितमुच्यते ।

आसुरं (१)चक्रघटितं दैवे पित्र्ये च वर्जयेत'

तथाचाग्निष्टोमे स्फ्याश्लेषे सति तन्निमित्तिकामिज्यां कृत्वा ऽग्निष्टोमयागः कार्य इति । तस्या इज्यायाश्च इष्टित्वेन दर्शधर्मप्राप्तेः—सर्वासामिष्टीनां दर्शपूर्णमासौ प्रकृतिः,'प्रकृतिवच्च विकृ-

---

१ कुलालचक्रेण निर्मितमित्यर्थः ।

तिः' इतिन्यायेन दर्शधर्मस्य पूर्वदिने देवताऽऽवाहनस्य प्राप्तिः। तथा च परदिने स्फ्याश्लेषसंशयेऽपि पूर्वदिने आवाहनं कार्यमेव। अन्यथा सति यागे तत्राङ्गवैगुण्यापत्तेः; इत्यत्र सिद्धान्तसूत्रम्—"न नैमित्तिकत्वात्" इति। नैमित्तिके निमित्तनिश्चयवानधिकारी। तेन पूर्वदिने तदभावान्न यागाधिकारः। प्रधानाधिकाराभावे च कथमङ्गानुष्ठानमिति पूर्वदिने नाऽऽवाहनम्। परदिने स्फ्याश्लेषे सत्यपि नाऽऽवाहनं, तत्र पूर्वादनस्याङ्गत्वादिति तत्राऽऽवाहनबाध एव। निमित्तनिश्चयश्चासति प्रतिबन्धे अवश्यमेव कर्तव्यमित्येवंरूपः। तेन भविष्यद्विवाहादिनिमित्तकमाभ्युदयिककरणं सिद्ध्यति। अन्यथा भाविनि मानाभावेन(१)तेषामनिश्चयात्तत्रापि वृद्धिश्राद्धं न स्यात्। इज्यायां तु तादृशो निश्चयो नास्ति स्फ्याश्लेषसंशयेन संशयादिति।

२६ अथ कृष्णलन्यायः—

"कृष्णलान् श्रपयेत्" इति व्रीहिविकृतियागे श्रूयते। कृष्णलश्च कलापाकारः स्वर्णमाषनिर्मितः। तत्र यागे व्रीहिधर्मावघातप्राप्त्या तुषाभावेऽप्यदृष्टार्थं कृष्णले ऽवघातः कार्य इत्यत्र सूत्रम्—"द्वाराऽसम्भवात्" इति। अवघातस्य वैतुष्यं द्वारं, तस्य च तत्र स्वतः सिद्धत्वादवघातो व्यर्थः। नचादृष्टार्थः। दृष्टार्थत्वे सम्भवत्यदृष्टार्थत्वकल्पनाया अयुक्तत्वाद्गौरवादिति कृष्णले ऽवघातबाधः।

२७ अथ कपालाधिकरणम् —

"व्रीहिभिर्वायव्यं यजते, अष्टाकपालं पुरोडाशं करोति, पुरोडाशकपालेन तुषान् उपवपति" इति श्रूयते। अत्र

(१) विवाहादीनाम्।

यागे शूर्पेण न तुषप्रस्फोटनं किन्तु पुरोडाशकपालेन । तत्र चाष्टानां कपालानां सत्त्वात् केन कपालेनेत्यनध्यवसाये सूत्रम् -"प्रथमोपस्थितिस्तन्त्रम्" इति । अयमाशयः- द्रव्यासादने पश्चिमावधि पूर्वान्तं पंक्तिक्रमेण तत्र कपालस्थापनम् । तथाच यजमानसन्निधौ यत्कपालं प्रथमपुरोडाशार्थमासादितं तस्य सन्निहितत्वेन प्रथमोपस्थितत्वेन च तदेव तुषप्रस्फोटनार्थं ग्राह्यमिति । तथाच लक्षणया प्रथमोपस्थितपुरोडाशकपालेन इत्यन्वयबोधः । अत्र पुरोडाशकपालेत्यत्र लक्षणाया आवश्यकत्वात् । लक्षणया यदि पुरोडाशप्रयोजनकं कपालमित्युच्यते तदा तत्र नोपवापाकाङ्क्षा । प्रयोजनवत्त्वेनोपस्थितस्य प्रयोजनान्तरानाकाङ्क्षत्वात् । तथाच तत्र नोपवापान्वयः स्यात् । तेनाधिष्ठाने लक्षणा कर्तव्या। पुरोडाशाधिष्ठातव्यकपालेनेत्यर्थः । अधिष्ठानन्तु स्थितिरेवेति ।

## २८ अथार्थवादाधिकरणम्-

"शम्भुः सर्वदेवेश आशुतोषः सर्वकामफलप्रदश्च" इत्यर्थवादः श्रूयते । कार्यान्वितबोधकत्वन्तु सर्वशब्दानाम् । अर्थवादस्य सिद्धार्थकत्वात् अन्वयबोधाजनकत्वात् व्यर्थमेवाभिधानमित्यत्र सूत्रम्-"विधिशेषत्वात्प्रामाण्यम्" इति । विधिशेषत्वात् विध्येकवाक्यत्वात् । तथाच यस्यार्थवादस्य विधिसमभिव्याहारस्तस्य प्रामाण्यमिति । विधिश्च द्विविधः-क्लृप्तः कल्प्यश्चेति । तथाचात्र विधिः कल्प्यः । तस्मात् 'सर्वकाम्यकामः शम्भुं यजेत' इति । क्लृप्तविधिर्यथा-'वायुर्वै क्षेपिष्ठा(१) देवता' इत्यर्थवादस्य "वायव्यं श्वेतमालभेत" इतिश्रुतविधिनैकवाक्यत्वमिति ।

---

१ शीघ्रफलदात्रीत्यर्थः ।

२९ अथ विरोधाधिकरणम्—

"औदुम्बरीं स्पृष्ट्वोद्गायति" इति ऐन्द्रयागे श्रूयते । तत्रैव यागे 'सर्वा औदुम्बरी वेष्टयितव्या' इति कात्यायनोक्ता स्मृतिः। तथा च स्मृतेरपि श्रुतिमूलकत्वादुभयोः समबलत्वेन स्पृष्ट्वेत्यत्र श्रुतौ (१)उपस्पर्शलक्षणाया अयोगात्, एवं स्मृतावपि सर्वपदसङ्कोचस्यायुक्तत्वादनुपपत्तिरित्यत्र सूत्रम्—"श्रुत्या स्मृतिर्बाध्यते" इति। श्रुतेर्बलवत्त्वादिति भावः। तथा च स्मृतौ सर्वपदे सङ्कोचः—स्पर्शयोग्यभागं विहाय सर्वा वेष्टयितव्येति। नच स्मृतेरपि समानार्थकश्रुतिमूलकत्वमिति वाच्यम्। स्मृत्या ऽनुमीयमाना श्रुतिः प्रत्यक्षश्रुतिविरोधेन स्मृतिसमानार्थिका अनुमातुं न शक्यते किन्तु श्रुत्यनुगुणैवानुमातव्येति। औदुम्बरी—उदुम्बरवृक्षनिर्मिता पशुबन्धनार्थं स्थूणा, तस्या एव यूपसंज्ञेति। माधवीये तु औदुम्बरी उदुम्बरशाखेति व्याख्याता।

३० अथ प्रतिनिध्यधिकरणम्।

"व्रीहिभिर्यजेत" इत्यत्र व्रीहेरुपादाने कृते तदपचारे सति यागो न सम्भवति। न च यत्रोपादानं कार्यं विकल्पे एकोपादाने ऽन्यग्रहणस्य निराकाङ्क्षत्वेनासम्भवेनाशास्त्रार्थत्वादिति पूर्वपक्षे सिद्धान्तसूत्रे—"पूतीकाविधिदर्शनात्" "सारूप्यं तन्त्रम्" इति। तथाच प्रतिनिधिना सदृशेन कर्म्माऽऽचरणीयम्। अन्यथा "यदि सोमं न विन्देत, पूतीकानभिषुणुयात्' इत्यस्य वैयर्थ्यं स्यात्। अयम्भावः—व्रीहिर्न चरुसाधनं, किन्तु तदवयवस्तण्डुलः। तथाच 'व्रीहिभिर्यजेत' इत्यत्र

---

(१) सर्ववेष्टनस्मृतिबलेन स्पृष्ट्वेति पदस्य वस्त्रव्यवधानेन स्पर्शं कृत्वेत्यर्थे लक्षणाया अयुक्तत्वादित्यर्थः।

व्रीहिशब्दस्य तदवयवे लक्षणा । तेन व्रीह्यवयवप्रत्यभिज्ञायाः शाल्यवयवेऽपि सदृशत्वदर्शनात् व्रीह्यभावे शालिर्ग्राह्य इति । एतन्न्यायमूलं वचनं ।

"यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।

यवानामिव गोधूमा व्रीहीणामिव शालयः" इति ।

अन्यथा प्रतिनिध्यस्वीकारे "मौद्गश्चरुर्भवति, अयज्ञीया वै माषाः" इति माषनिषेधानुपपत्तिरप्राप्तत्वात् । अत्र च माषा इति बहुवचनं माषमिश्रितमुद्गस्यापि निषेधार्थम् । तथाच प्रतिनिधित्वेन प्राप्त्या निषेधः । एवं 'काण्डमूलपत्रपुष्पफलप्ररोहगन्धरसादिना सादृश्येन प्रतिनिधिं कुर्यात्' इति पैठीनसिवचनादपि यथायथं प्रतिनिधिर्बोध्य इति ।

अत्र वदन्ति—किं तावत्प्रतिनिधित्वम् ? । न हि तत्कार्यकारित्वम् । तत्रैव मुख्ये गतत्वात् । नच तदभावे तत्कार्यकारित्वम् । होमाद्ययोग्येन यजमानेन संकल्प्य यागादौ प्रतिनिधिकरणे यजमानस्य सत्त्वेन तत्प्रतिनिधावगतत्वात् । नच तदभाव इत्यस्य तदयोग्यत्वे इत्यर्थः । विज्ञेनापि यजमानेन वाचानिकप्रतिनिधिकरणे ऽसत्त्वात् । 'होतारं वृणुयात्' इति विधेः । न च तत्र होता न प्रतिनिधिः किन्त्वङ्गमेव, तत्र स्वयं प्रक्षेपस्य विधानात् । होता तु न यागकर्ता तस्य द्रव्ये स्वत्वाभावात् किन्तु प्रक्षेप्तोच्यते । मुख्ये यागे यागरूपे यजमान एवाधिकारी, अतो लक्षणं युक्तमेवेति वाच्यम् । तथाऽप्यन्यकार्यस्यान्याजन्यत्वात् । व्रीहित्वेन कारणत्वस्य श्रुतत्वात् । अन्यथा व्रीहेर्व्यभिचारेण जनकत्वं न स्यात् । उच्यते । तद्यागत्वेन तत्र विहितचरुत्वेन-एवं तच्चरुत्वेन तत्र विहितद्रव्यत्वेन कार्यकारणभावस्य वाच्यत्वादुक्तमेव लक्षणमिति ।

३१ अथ फलभूमाऽधिकरणम्—

आधाने दक्षिणा श्रूयते "एका देया, तिस्रो देयाः, षट् देयाः" इति । अत्र चैकदक्षिणावरुद्धे दक्षिणान्तरस्य निराकाङ्क्षतयाऽनन्वयात् वाशब्दः कल्प्यते । तेन एका वा देयेति । तथाच तिस्र इत्यत्राऽऽकाङ्क्षा भवति । वाशब्दस्य कोट्यन्तराकाङ्क्षोत्थापकत्वात् । तथा च "अल्पेनेष्टस्य संसिद्धावधिके कः प्रवर्तते" इति न्यायात् गोत्रयादिदक्षिणायामप्रवृत्तौ तद्वेदाप्रामाण्यमित्यत्र सूत्रम्—"यो भूय आरभते, तस्य फले विशेषः" इति । भूय इति बहुशब्दस्य सिद्धम् । तेन भूयः बहूपकारणाङ्गकम्, उत्कृष्टाङ्गकञ्च; एवं बहुकालकृच्छ्रसाध्यं, कृष्टोत्कर्षसाध्यञ्च । आरभते—करोति । तस्य फले विशेषो बहुकालव्यापकत्वम् । फलगतोत्कर्षविशेषश्च भवतीत्यर्थः । तेनाधिकफलार्थिना तिस्रो देया इति ।

अत्र वदन्ति । "स्वर्गकामो वसन्ते आदधीत" इत्याधानविधौ स्वर्गकाम इति श्रवणात्तत्कामना—अधिकारः, नतु स्वर्गविशेषकामना । तथा चाधिकारिप्रविष्टकामनायामनुल्लिखितफलस्य यागजन्यत्वे ऽतिप्रसङ्गात् कथं फलभूमेति ? उच्यते । यथा दीपमात्रार्थी दीपं करोति तत्र च तैलबहुत्वे तस्याधिककालव्यापकत्वं, वर्त्युत्कर्षे दीपोत्कर्षः, कारणवैलक्षण्यात् । तथाऽत्रापि सामान्यकामनाया अधिकारात् सामान्यफलं भवत्येव, विशेषस्तु कारणवैलक्षण्यात् । विशेषफलेऽपि सामान्यधर्मोऽस्त्येव । नचातिप्रसङ्गः । अन्यफलप्रयोजकरूपासत्त्वादिति ।

३२ अथानुषङ्गाधिकरणम्—

"पारमेष्ठ्यकामः परमेष्ठिनं यजते भास्वन्तम्" इति श्रु-

त्या परमेष्ठिदेवतावरोधे देवतान्तरं निराकाङ्क्षमिति । तथाच भास्वन्तमित्यत्र पारमेष्ठ्यकाम इत्यस्य यजते इत्यस्य चानुषङ्गात्कर्मान्तरविधिः । तत्कामो भास्वन्तं सूर्यं यजते इत्यत्र सूत्रम्— "वाक्यभेदापत्तेर्विशेषणत्वम्" इति । तथा च भास्वन्तमिति परमेष्ठिविशेषणम्, न तु रूपपरं, वाक्यभेदभिया रूढ्यर्थोऽपि त्यज्यत इति । एवमनुषङ्ग एकत्र समभिव्याहृतस्य पदस्य वाक्यान्तरे समभिव्याहारः । तत्कल्पनञ्च तात्पर्यकल्पनाधीनम् । तत्र च मानाभावः । यत्र तु तत्प्रमाणमस्ति तत्रानुषङ्गाधिकरणन्यायो न प्रवर्तते इति बोध्यम् ।

२३ अथ देवतासाहित्याधिकरणम्—

"अग्नीषोमीयं पशुमालभेत" इत्यत्र "द्वन्द्वात्परो यः श्रूयते स प्रत्येकमभिसम्बध्यते" इति न्यायाच्छप्रत्ययबोध्यदेवतात्वस्य प्रत्येकमन्वयेन प्रत्येकं देवतात्वं युक्तम् । अत एव 'मनोतास्यग्ने मारिरिषस्त्वन्तवे जुषस्व सर्वरीरं नियुंक्ष्व वाह" इति मन्त्रेण केवलाग्निप्रकाशकेन होमः सङ्गच्छते । सोमस्य होमस्तु परिभाषिकेण प्रणवादिचतुर्थ्यन्तनाम्नेत्यत्र पूर्वपक्षे सूत्रम्—"विकल्पापत्त्या अष्टदोषग्रासात्" इति । साहित्यानवच्छिन्नयोः केवलाग्नीषोमयोर्धर्मिणोस्तात्पर्यविषयत्वे विकल्पापत्तेः । एकदेवतावरुद्धे यागे देवतान्तरविधानस्य साकाङ्क्षत्वाय विकल्पः स्यात् । तथा चाष्टदोषग्रासः । ते च वक्ष्यन्ते ।

अत एव 'यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रातः' इत्यत्र प्रत्येकश्रुतावपि साहित्येन देवतात्वमुक्तम् । नच यागे चतुर्थ्यन्तपदप्रयोगे समाहारः प्रयोज्य इतरेतरो वेति वाच्यम् । समाहारे साहित्यस्य विशेष्यत्वात्, तस्य च देवतात्वाभावात् । इतरेतरे तु पदार्था एव

विशेष्या इति स एव आदरणीयः । तेनाग्निप्रजापतिभ्यां स्वाहेति वाच्यम् । "द्वन्द्वात्पर" इति न्यायस्तु यत्र साहित्यान्वयो योग्यस्तत्परः । यथा शस्त्राशस्त्रहतानामित्यादौ । 'इन्द्राग्निलोकमाप्नोति तत्तीर्थे स्नानमात्रतः' इत्यादौ चेन्द्राग्न्योरेकलोकाभावादिति । तथाच मनोहामन्त्रे अग्न इति पदस्य सोमसाहित्ये लक्षणा । नच लक्षणा स्वार्थहानि–परार्थकल्पना–दोषद्वयदुष्टेति वाच्यम् । अनन्यगतिकत्वात् ।

अथ विकल्पः—स द्विविधः । ऐच्छिको व्यवस्थितश्च । आद्यो यथा–"व्रीहिभिर्यजेत" "यवैर्वा यजेत" इत्यनेन यागे हेतुत्वमुभयोर्बोध्यते । तत्र चैकसाधनावरुद्धे साधनान्तरविधेर्निराकाङ्क्षतापत्त्या विकल्पार्थे वाशब्दः यवैर्वेति । वाशब्दार्थश्चान्यतरव्यवच्छेदेनान्यतरान्वयः । तेन व्रीहौ यवाभावः । सहकारियवे व्रीह्यभाव इति । नच व्रीह्यभावे यव इति यवस्य पश्चादुपदेशात् प्राप्यते, यवाभावे व्रीहिरिति कुत इति वाच्यम् । व्रीहिजन्यपुरोडाशे यवस्य सहकारित्वे व्रीह्यभावे यव इत्येव न स्यात् । नच समुच्चय एव कथं न कल्प्यते इति वाच्यम् । तर्हि एकस्य यजातिपदस्य वैयर्थ्यापत्तेः । तथाच यजेतेति पदेन प्राधान्येनैवोभयस्य हेतुत्वं बोध्यते । तच्च विकल्पं विना ऽनुपपन्नमिति । तेन यवजन्यपुरोडाशे व्रीह्यभावः कारणमवच्छेदको वा । नच यत्रोभयमस्ति तत्र को ग्राह्य इति वाच्यम् । तत्र यागाभाव एवान्यतराभावविशिष्टस्याऽन्यतरस्याभावात् इति पूर्वपक्षे सूत्रम्—"इच्छातो नियम" इति । तेन तुल्यबलयोर्विकल्प ऐच्छिकः । तथा च यत्र व्रीहिमात्रमस्ति पुरुषस्य तु न तत्रेच्छा, तत्र यागनिवृत्तिरेव । एवं यवेऽपि ।

ऐच्छिकविकल्पे ऽष्टौ दोषा यथा–स्वार्थस्य व्रीहेस्त्यागः, प-

रार्थस्य व्रीह्यभावस्य कल्पनं, व्रीहिभिरिति तृतीयार्थस्य साधनत्वस्य प्रकृत्यर्थे ऽनन्वयः, अन्वयश्चाप्रकृत्यर्थे व्रीह्यभावे इति व्रीहिपक्षे चत्वारो दोषाः। एवं यवपक्षेऽपीत्यष्टौ दोषाः।

"स्वार्थत्यागो ऽन्यार्थक्लृप्तिः प्रकृत्यर्थेऽप्यनन्वयः।

अन्वयश्चाप्रकृत्यर्थे द्वयोरित्यष्टदोषकाः" इति।

अत्र वदन्ति। व्रीह्यभावस्य जनकत्वे जनकीभूताभावप्रतियोगित्वेन व्रीहेः प्रतिबन्धकत्वापत्तिः(१)। नच यवजन्ययागे तदस्त्येवेति वाच्यम्। नहि "यवैर्यजेत" इत्यनेन पृथग्यागविधिः, वाक्यभेदापत्तेः। किन्तु प्राप्तपुरोडाशकरणकयागे व्रीहियवयोः साधनत्वविधिः। तथाच यवयजन्ये यागे व्रीहेः फलोपधानाभावेऽपि जननयोग्यताऽस्त्येवेति तस्य प्रतिबन्धकत्वं विरुद्धमेव। तयोर्जनकत्वञ्च तृणारणिमणिन्यायेनेति। अत एव

'सपिण्डीकरणादूर्ध्वं सांवत्सरिकमाचरेत्'।

इत्यनेन प्राप्ते सांवत्सरिके श्राद्धे मृताहविधानम्। तदसम्भवे तत्रैव कृष्णैकादश्यां विधानं, नत्वेकादशीनिमित्तकश्राद्धान्तरं विधीयते। तथा सति तस्य श्राद्धस्य सपिण्डीकरणोत्तरत्वेन मृताहानिमित्तकत्वेन च त्रैपुरुषिकत्वापत्तेरिति। नचैवमपि तस्य मृताहानिमित्तकत्वमेवेति वाच्यम्। 'एकोद्दिष्टं मृताहनि' इत्यस्य मृताहनिमित्तकत्वयोग्यताया आर्थत्वात्। योग्यता च तादृशविधिविषयत्वमिति।

अत्राहुः—व्रीह्यभावस्याङ्गत्वं न श्रुतं, किन्तु कल्प्यम्। तथा चावच्छेदकत्वेनोपपत्तौ न तस्य कारणत्वं कल्प्यते। तेन व्रीह्यभावावच्छिन्नत्वेन यवस्य हेतुतेति। अभावस्यावच्छेदकत्वकल्प-

(१) तद्वत्ताबुद्धिं प्रति तदभाववत्ताबुद्धेरिव तुल्यवित्तिवेद्यन्यायात्तदभाववत्ताबुद्धिं प्रति तद्वत्ताबुद्धेः प्रतिबन्धकत्वमिति भावः।

नमेवैको दोषो बोध्यः । केचित्तु व्रीहेर्मुख्यत्वं यवस्यानुकल्पत्वमुभयोपस्थितौ मुख्यत्वाद् व्रीहिरेव ग्राह्य इति वदन्ति। तन्मते—

'वैशाखे पौर्णमास्यां तु नरो भक्तिसमन्वितः ।
शम्भुं हरिं वा सम्पूज्य स्वर्गलोके वसेच्चिरम्' ॥

इत्यैच्छिकविकल्पोदाहरणं बोध्यम् ।

**व्यवस्थितविकल्पो द्विविधः** । मुख्यकल्पानुकल्पभेदेन शस्ताशस्तभेदेन च । **आद्यो यथा**—'कुशैः काशैर्भवेच्छ्राद्धम्' इत्यत्र काशे कुशाभावः सहकारी, नतु कुशे काशाभावः । सत्यपि काशे कुशस्यैव ग्रहणान्मुख्यत्वात् । तेनात्र षट् दोषाः । कुशपक्षे स्वार्थहानिः परार्थकल्पना कुशजनकत्वबाधः अभावस्यावच्छेदकत्वम् । काशपक्षे स्वार्थहानिः स्वार्थस्य जनकत्वाभावश्चेति । **शस्ताशस्तभेदश्च**—क्वचिच्छक्त्यपेक्षः क्वचिदैच्छिक इति यथायथं दोषा बोध्या इति । शस्तत्वमधिकफलजनकत्वमिति ।

### ३४ अथ यावज्जीवाधिकरणम् ।

"सन्ध्यामुपासते ये तु" इत्याद्यर्थवादोपस्थितफलकामनाया अधिकारत्वबोधात् । अन्यथा ऽर्थवादवैयर्थ्यात् । तथा च फलकामनाविरहे ऽधिकाराभावात्तदकरणे प्रत्यवायो न स्यात् । अशौचकालवदित्यत्र पूर्वपक्षे सूत्रम्—"**यावज्जीवश्रुतिविरोधात्**"अ० २पा० ४सू० २इति(१)। "यावज्जीवमहरहः सन्ध्यामुपासीत" इति विधिना"शुचिः कुर्यात्"इत्यनेनैकवाक्यतया (२)शौचकालीनजीवनस्य सन्ध्यावन्दनव्याप्तिर्बोधितेति तद्बाधापत्त्या न फलकामना

(१) 'कर्तुर्वा श्रुतिसंयोगात्' इति पाठः ।
(२) 'शुचिश्चकालजीवी कर्माधिकारी' इति सूत्रम् ।

तत्राधिकारः। अर्थवादस्तु विध्यपेक्षया दुर्बलः स्तुतिरूपः कर्तृप्रोत्साहार्थम्। तथाचोक्तम्—'प्ररोचना चाङ्गतयोपयुज्यते' इति।

३५ अथ जातेष्ट्यधिकरणम्।

अश्वयुक्कृष्णपक्षश्राद्धादौ पक्षव्यापकश्राद्धस्य प्रशस्तत्वम्। तच्चाधिकफलवत्त्वम्। तेन फलजनकत्वं तस्य सिद्धम्। तथाच फलकामनाया अधिकारत्वे काम्यत्वान्नित्यत्वहानिः स्यादित्यत्र भाष्यम्—'जातेष्टिवत्सम्वलिताधिकारात्'इति। यथा—जातेष्टेरकरणे प्रत्यवायो 'बालहा भवेत' इतिश्रुतेः। करणे पुत्रपूतत्वं फलम्। तथाच पुत्रोत्पादकस्य तत्संस्कारकामना नियता भवत्येवेति जीवित्वसहिता फलकामना जातेष्टावधिकारः। तथा पक्षश्राद्धप्रवृत्तस्य फलकामना नियताऽस्त्येव। अन्यथा प्रत्यवायपरिहारमात्रस्य चरमकल्पाल्लघूपायादेव सिद्धेः तन्मात्रार्थं बहुवित्तव्ययाऽऽयाससाध्ये पक्षश्राद्धे प्रवृत्तिर्न स्यादिति। तत्प्रवृत्तस्याधिकोद्देश्यताऽस्त्येव। तथाच जीवित्वसहिता फलकामना तत्राधिकार इति काम्यत्वेऽपि नावश्यकरणत्वहानिः।

३६ अथ काम्यस्य नित्यापेक्षया विलम्बिताधिकारः—

"कार्तिक्यामायुष्कामः प्रातर्घृतं दद्यात" इति श्रुत्या प्रातर्दानं विहितम्। अग्निहोत्रमपि तत्काले कर्तव्यम्। तथा च किमादौ कर्तव्यमिति तत्र सिद्धान्तः—काम्यं हि कामनापेक्षं, सा चेष्टसाधनत्वज्ञानसापेक्षेति विलम्बिताधिकारम्(१)। "यावज्जीवमग्निहोत्रं जुहोति" इति श्रुत्या कृताग्निग्रहणस्याग्निहोत्रं जीवनमात्रापेक्षमिति नित्यं झटित्यधिकारम्। अतोऽग्निहोत्रमादौ कार्यम्। नन्वेवमुपरागे श्राद्धात्पूर्वं दानं न स्यात्।

---

(१) विलम्बितोऽधिकारो यस्मिंस्तदिति बहुव्रीहिः। एवं झटित्यधिकारमित्यत्रापि बोध्यम्।

काम्यत्वेन तत्र विलम्बिताधिकारात् । श्राद्धस्य नित्यत्वेन झटित्यधिकारात् । तत्काले ऽधिकृताकरणेन प्रत्यवायप्रसङ्गात् । श्राद्धानन्तरञ्च दाननिषेधात्तदुत्तरमपि न स्यादिति दानस्य बाध एव स्यात् । नच दानविधिबलाद्भविष्यति दानविधेः श्राद्धानधिकारिजीवत्पितृकादिपरत्वेनोपपत्तेः । उच्यते—

'स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने'

इति वचने, तथा—

'स्नाने दाने तथा जप्ये होमे श्राद्धे सुरार्चने ।

पुण्यः स कालो भविता नित्यमेव सुरेश्वर' ॥

इति वचने च स्नानानन्तरं दानस्य पाठात् श्राद्धात् पूर्वं पाठाच्च दानमेवाऽऽदौ । तदानीं श्राद्धाकरणेन जातस्य प्रत्यवायस्य पश्चात् श्राद्धकरणेन नाशात् । यथा शरदि नवश्राद्धाऽनाचरणजन्यप्रत्यवायस्य गौणकाले वृश्चिके करणेन नाश इति ।

**अत्रेदं बोध्यम्**—यदि स्वल्प उपरागे कालः तदा श्राद्धमेव कर्तव्यं नित्यबाधेन काम्यस्यान्याय्यत्वात् । यदि स्नानतर्पणाभ्यामेव कालो गच्छति तदा कालाभावात् श्राद्धं नास्त्येव ।

### ३७ अथ तदन्तापकर्षन्यायः—

"अनुदिते जुहोति" इत्यनेनारुणोदये होमस्य कर्तव्यता विहिता । स्नानकालोऽपि स एव । तथा च निरवकाशत्वाद्धोम एव कर्तव्यस्तदानीं न स्नानं, तत्पूर्वञ्च न स्नानं रात्रित्वात् । तेन स्नानं विनैव होमः । तेन 'स्नातो अधिकारी भवति' इत्यत्र (१)सङ्कोच इति पूर्वपक्षे सूत्रम्—"तदन्तापकर्षादुपपत्तेः" इति । रात्रावलक्ष्मीः कालकर्त्री । दुःस्वप्नेन्द्रियश्रवणादिना

(१) अनुदितहोमकर्त्रतिरिक्ततयेति भावः ।

अशौचं जातम् । नहि सति अशौचे होमः । अतः स्नानं तत्पूर्वं कर्तव्यं सन्ध्यावन्दनञ्च पूर्वं सन्ध्यावन्दनहीनस्य कर्मानर्हत्व-बोधनात् । सूत्रार्थस्तु तदन्तत्वादपकर्षः—तस्य पूर्वकर्तव्यतेति । तथा च स्नानानन्तरकर्तव्यत्वात्स्नानस्यापकर्षः । विहितकालं विनाऽपि पूर्वाचरणमिति । तेनारुणोदयस्नानविधिरनुदिनहो-मीतरपरः ।

३८ अथ तदाद्युत्कर्षन्यायः—

उत्कर्षः स्वकालं विहायोत्तरकालकर्तव्यता । तथा च यत्कर्म तदादिभूतं तत्स्वकाले ऽकृत्वा तदुत्तरकाले कर्तव्यम् । यथा सपिण्डनं स्वकाले ऽपराह्णे कृत्वा तद्दिवसीयं सांवत्सरिकं मध्याह्नाभावेऽपि कर्तव्यं सपिण्डनस्य तदादित्वात् । नच तदन्तापकर्षन्यायात्सपिण्डनं पूर्वाह्णे कृत्वा सांवत्सरिकं मध्याह्ने क्रियतामेकस्य कालत्यागे विनिगमनाभावादिति वाच्यम् । स-पिण्डनस्य भावरूपपितृत्वप्राप्तिफलकत्वात् । भावात्मकफलं तु मुख्यकालेनैव भवतीति । सांवत्सरिकस्य प्रत्यवायपरिहारमात्रा-र्थकत्वेन गौणकालेऽपि सम्भवात् ।

अत्र केचित्—

‘तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते’

इतिवचनात् सपिण्डनात्पृथक् न सांवत्सरिकं कर्तव्यमिति वदन्ति । तन्न—

‘असंक्रान्तेऽपि कर्तव्यमाह्निकं प्रथमं द्विजैः ।
तथैव मासिकं पूर्वं सपिण्डीकरणं तथा’ ॥

इत्यस्य निर्विषयत्वापत्तेः । तेनैव च सपिण्डत्वमिति वचन-स्यानाकरत्वात् । साकरत्वेऽपि एकादश्यादिक्रियमाणपतितस-पिण्डनपरमिति ।

### ३९ अथ संयोगपृथक्त्वन्यायः—

"खादिरे पशुं बध्नाति" खादिरं वीर्यकामस्य यूपं करोति" इति श्रुतिभ्यां खादिरस्य नित्याङ्गत्वम्, काम्याङ्गत्वञ्च बोधितम्। काम्यञ्च कामनासापेक्षत्वादनियतम्। तथाच सति अनित्यसंयोगविरोधः। संयोगः सम्बन्धः प्रकृते तादात्म्यमिति यावत्। नच खादिरः काम्य एव। तथा काम्यत्वेन प्राप्ते खादिरे पशुबन्धनाश्रयत्वमात्रं "खादिरे पशुं बध्नाति" इत्यनेन विधीयते। तेन यत्र कामनाविरहाद्यूपाभावस्तत्र पशुबन्धनाभाव एवेति वाच्यम्। खादिरे इत्यस्य सप्तम्यन्तस्य वैयर्थ्यापत्तेः। सान्निध्यादेवाश्रयलाभात्। यस्यानियताङ्गत्वं तत्र नित्याङ्गत्वं नास्त्येव। यथा "चमसेनाऽपः प्रणयेत्, गोदोहेन पशुकामस्य" इति। चमसो—यत्काष्ठनिर्मितं प्रणीतार्थं पात्रं सः। गौर्दुह्यते ऽत्रेति गोदोहो दोहनपात्रम्। गोदोहेनाऽपां प्रणयनं कामनासत्त्वे एवेति तस्यानियताङ्गतेति। तथा च खादिरे नियतत्वमनियतत्वञ्च विरुद्धमित्यत्र सूत्रम्—"एकस्योभयत्वे संयोगपृथक्त्वम्" इति। एकस्याङ्गस्योभयत्वे नित्यत्वकाम्यत्वोभयत्वे संयोगयोः प्रयोजकधर्मसम्बन्धयोः पृथक्त्वं द्वित्वं प्रयोजकमिति। नियताङ्गत्वप्रयोजकं यागं प्रति नियतपूर्वसत्त्वं, काम्याङ्गत्वप्रयोजकं यागं प्रति नियतपूर्वासत्त्वं यस्याङ्गत्वप्रयोजिका कामना। एतदुभयसम्बन्धयोः पृथक्त्वमस्त्येव। खादिर इति। अयम्भावः—यूपे पशुं निबध्याथ प्रोक्षयेदालभेत। तत्र परिभाषया यूपे पशुनिबन्धनमावश्यकम्। ततः खादिरयूपस्य नियतत्वमेव। तत्रैव यूपे काम्यत्वं बोधितम्। अपिना नियतत्वं कर्तुं समर्थम्। अतोऽत्र न नित्यत्वकाम्यत्वयोर्विरोधः। तेन यस्य न कामना तेनापि खादिरः कर्तव्य एवेति। माधवीये तु "खादिरे पशुं बध्नाति"

इत्यत्र "खादिरो वै यूपो भवति" इति पाठो लिखितः। गोदोहे तु कामनासम्बन्धमात्रम् । अयञ्च न्यायोऽङ्गविषयो जातेष्टिन्यायस्तु प्रधानविषयः ।

४० अथ व्यक्तिवचनन्यायः—

"आग्नेय्या जुहोति" इति श्रूयते। आग्नेयी अग्निप्रकाशिका ऋक्। तस्याश्च स्थाने स्थाने नानाविधायाः श्रुतत्वात् सर्वा एव ग्राह्या इति केचित्, तन्न । प्रच्छन्नवेदवर्त्तितादृशऋक्शङ्कया ऽप्रवृत्तेः। तथा च यस्यामृचि इच्छा तयैव जुहुयादित्यत्र सिद्धान्तसूत्रम्—"व्यक्तिवचनानां सन्निहितविशेषपरत्वात्" इति। व्यक्तिमात्रवाचकपदानां सन्निहितपरसन्निहिततमसन्निहितपरत्वात् । व्यक्तिवाचकास्तु योगार्थमात्रपुरस्कारेण प्रवृत्ताः पाचकादिशब्दाः। पाचकशब्दः पाककर्ममात्रे प्रयुज्यते । पाचकमात्रवृत्तिधर्मश्च न पाककर्त्तेति न तत्र प्रयोगः । एवञ्चाग्नेयीपदमपि व्यक्तिमात्रवाचकम् । अग्निर्देवता अस्या इति योगार्थत्वात्। तथाच सन्निहितैव ऋक् ग्राह्येति । मीमांसकमते रूढं घटादिपदं जातिवाचकम्। योगार्थप्रवृत्तम्पदं व्यक्तिमात्रवाचकं तत्र समुदायशक्त्यभावादिति। तेन गां दद्यादित्यत्र यत्रेच्छा तां गां दद्यात् । तत्र नायं न्यायः व्यक्तिवाचकत्वाभावादिति।

४१ अथ पणपुराणन्यायः—

"पुराणं षोडश पणा" इत्यत्र षोडशपणघटितं पुराणं श्रुतं तत्र च षोडशत्वं चरमव्यक्तेः । तथाचान्येषां पणानां कथं तद्घटकत्वमिति चेन्न, प्रत्येकापेक्षया सर्वेषां षोडशत्वात्।

४२ अथ दण्डापूपन्यायः—

पिष्टकेषु पाकार्थं स्थाल्यामधिश्रितेषु एकस्मिन् पक्षे तदुद्ध-

रणं सूच्यग्रेण दण्डेन क्रियते । अत्र च अपूपस्योद्धरणे दण्डस्यो-द्धरणं भवतीति ।

### ४३ अथ द्यूतपणन्यायः—

द्यूते प्रथमक्रीडायां यः पणः कृतः ततो द्विगुणः पणो द्वितीयवारक्रीडायां पराजयिना दुःखात्क्रियते । एवं तृतीयवारं दारपितृगुणादि । अत एव जिकनभट्टेन प्रथमप्राजापत्यानन्तरं द्वितीयादिप्राजापत्ये दुःखाधिक्यादेकधेनुर्नोचिता किन्तु धेनुद्वयादीत्युच्यते ।

### ४४ अथ कपिञ्जलाधिकरणम्—

"कपिञ्जलानालभेत" इति श्रुत्या कपिञ्जलगतं बहुत्वं बोधितम् । तच्च विवक्षितं विधेयगतसंख्यात्वात् । कपिञ्जलस्यान्यतोऽप्राप्तत्वाद्विधेयत्वम् । बहुत्वञ्च त्रित्वमारभ्य परार्द्धपर्यन्तमित्यनध्यवसायेनाप्रवृत्त्या तद्वेदाप्रामाण्यापत्तिरित्यत्र सूत्रम्—"प्रथमोपस्थितेस्तन्त्रत्वात्" अ० ११पा० १सू० ४३ इति(१)। त्रित्वोत्पत्त्यनन्तरं त्रित्वसहितैकत्वेन चतुष्ट्वं जन्यते इति मते त्रित्वस्य प्रथमोपस्थितत्वात्तदेव बोध्यते । यस्य मते ऽपेक्षाबुद्धिविशेषसहकृतेनैकत्वत्रयेण त्रित्वं जन्यते इति, तन्मते चतुष्ट्वोत्पत्तिकाले त्रित्वस्यानुपस्थितत्वान्न पूर्वव्याख्या समीचीना । किन्तु प्रथमोपस्थितिशब्देन लाघवमुक्तम् । तथाच व्यक्तिलाघवात् त्रित्वमेव बहुत्वमिति । कपिञ्जलो जलचरः पक्षिविशेषः ।

### ४५ अथ तक्षसूत्राधिकरणम्—

"पर्यङ्कीयतक्षसूत्रे च्छिन्ने आयुषीमिष्टिं निर्वपति" "आग्नेय्यां जुहोति" इति श्रुतिः । पर्यङ्कपरिमाणज्ञापनार्थं तक्ष्णा

---

(१) "प्रथमं वा नियम्यते कारणादतिक्रमः स्यात्" इति पाठः ।

यत्सूत्रं पर्यङ्कार्थककाष्ठे ऽर्पितं तस्य दैवाच्छेदे इत्यर्थः । अत्र च इष्टेः प्रधानत्वकल्पने फलकल्पनाऽधिकारकल्पनयोर्गौरवापत्त्या (१)पर्यङ्कस्यैवाङ्गित्वं कल्प्यते इति पूर्वपक्षे सूत्रम्—"अलौकिकस्य लौकिकाङ्गत्वायोगात्" इति । अयम्भावः—अङ्गस्य प्रधानविधिमापेक्षत्वं नियतम् । पर्यङ्के च प्रधाने विध्यभावादिष्टेर्न तदङ्गत्वं किन्तु सूत्रच्छेदनिमित्तकं तत्सूचितामङ्गलनाशाय कर्मान्तरमेवेति ।

## ४६ अथ आरम्भणीयन्यायः—

"आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारिप्समानः" इति श्रुतावारम्भणीयेष्टेर्दर्शपूर्वकाले कर्तव्यता बोधिता । तथा तस्या दर्शाङ्गत्वमेव कल्प्यते कर्मभेदे गौरवादित्र सिद्धान्तः—"तस्या अतः सफलत्वात्" इति(२) । यथा "आग्नावैष्णवमारम्भणीयाख्यं जुहोति वसुकामः" इति श्रुत्या सफलत्वबोधनात्, तदेकवाक्यतया चैकमेव कर्मेति । तथा चारिप्समान इत्यनेन दर्शारम्भकालकर्तव्यत्वमात्रं बोधितं नत्वङ्गत्वमिति ।

## ४७ अथाङ्गस्य प्रधानकालान्वयाऽनन्वयौ—

शिखाबन्धनस्याङ्गत्वं "विशिखो व्युपवीतश्च यत्करोति न तत्कृतम्"इत्यनेन श्रूयते । कर्मभेदे ऽङ्गानां भेदादङ्गस्य प्रधानकालान्वयनियमात् प्रतिकर्म पृथक् पृथक् शिखाबन्धनं कर्तव्यमि-

---

(१) पर्यङ्केष्टेरेवेत्यर्थः ।

(२) "सकृद्वा ऽऽरम्भसंयोगादेकः पुनरारम्भो यावज्जीवप्रयोगात्" ( अ० ९ पा० १ अधि० ११ सू० ३५ ) इति सूत्रं भाष्यादिपुस्तकेषु दृश्यते ।

स्यत्र सिद्धान्तः—साधारणे ऽङ्गे प्रधानकालान्वयानियमात् किन्तु असाधारणे प्रधानप्रयोगान्तर्गतेऽङ्गे प्रधानदेशकालान्वयनियमः । श्राद्धादिपूर्वदिनकर्तव्यनिमन्त्रणादिवारणाय प्रधानप्रयोगान्तर्गत इति ।

**४८ अथ समं स्यादश्रुतित्वादिति न्यायः—**

"अश्वं प्रस्तोतृप्रतिहर्तृभ्याम्" इति यागविशेषे एकाश्वदक्षिणोभयोः श्रूयते । अत्र कीदृशो भाग इत्यत्र सिद्धान्तः—"**समं स्यादश्रुतित्वात्**" (अ० १० पा० ३ अधि० १३ सू० ५३) इति । समभागकल्पनमित्यर्थः(१) ।

**४९ अथानेकार्थत्वाकल्पना—**

"आदित्यो वै यूपो भवति" इति । अत्राऽऽदित्यपदेन आदित्यवर्ण उच्यते । आदित्यस्य यूपत्वासम्भवात् । तथा च आदित्यपदस्य आदित्यवर्णे शक्तिरेवाऽऽदित्यपदप्रयोगादित्यत्र सूत्रम्—"**अन्यायश्चानेकार्थत्वम्**" इति । लक्षणयाऽप्युपपत्तौ न शक्तिः कल्प्यते । शक्तिकल्पने नानार्थता स्यात् सा चायुक्ता । अत्र च बोधकाभावे सतीति बोध्यम् । तेन हरिपदादौ न दोषः । तत्र शक्तिग्राहकमानस्य कोशस्य बोधकत्वादिति ।

**५० अथ प्रक्रमाधिकरणम्—**

"मनसा सङ्कल्पयति, वाचा ऽभिलपति, कर्मणा चोपपाद-

(१) वस्तुतस्तु इदं सूत्रं पूर्वपक्षसाधकम् । "अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयान्न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाऽभ्युदये" इति सूत्रेण—दीक्षावाक्ये प्रतिहर्तुस्तृतीयित्वसमाख्यानात् प्रस्तोतुश्चार्द्धित्वश्रुतेः समाख्याश्रुतिबलाद्विषमैव दक्षिणेति सिद्धान्तितम् । उभयसमुदायस्याचेतनत्वेन संप्रदानत्वासम्भवाद्दक्षिणा विभज्यैव दातव्येति च भाष्यादितोऽवगन्तव्यम् ।

याति, प्रक्रमे च सकुशतिलं सलिलं त्यजति" इति श्रुत्या प्रक्रमे कर्मारम्भसमये कुशतिलसहितजलत्यागो विहितः। आरम्भश्च मनसा सङ्कल्पयतीत्यनेन बोधिता कर्मेच्छैव। तथा च कर्मकरणेच्छाकाल एव सलिलत्याग इत्यत्र सिद्धान्तः—"**तस्याः प्रक्रमत्वासम्भवात्**" इति। इच्छायाः पूर्वमासपूर्वदिनादावपि सम्भवात्तस्या न प्रक्रमत्वं किन्त्वभिलापस्य। तथा चाभिलापनिष्पत्तौ सकुशतिलजलत्यागः कार्य इति।

### ५१ अथ पृथग्विधौ गुणविधानासम्भवः—

"स्वर्गं नयति चात्मानं तथा पितृगणानपि।
कल्पे यः स्नाति तपसि यत्किञ्चित्सलिलाशये"॥

इति श्रूयते। कल्पे—उषसि। तपसि—माघे। अत्र च न कर्मान्तरविधिः, किन्तु प्राप्तनित्यस्नाने माघाख्यगुणविधिरिति तेन पृथक् न सङ्कल्प इत्यत्र सिद्धान्तः—"**पृथग्विधाने गुणविधानायोगात्**" इति। पृथग्विधानं प्रकरणान्तरे विधानम्। नित्यस्नानप्रकरणे माघस्नानाविधानात्कर्मान्तरमेवेति।

### ५२ अथ सर्वशक्त्यधिकरणम्—

ननु नित्यस्य यथा किञ्चिदङ्गहान्याऽपि सिद्धिस्तथा काम्यस्यापि स्यात् विहितत्वाविशेषादित्यत्र सिद्धान्तसूत्रम्—"**काम्ये सर्वशक्तिमानधिकारी**" इति। अयमर्थः— काम्यापूर्वं प्रति तत्तदङ्गानां हेतुत्वेनैकस्याप्यभावे काम्यापूर्वानिष्पत्तेः। नित्ये तु काम्यापूर्वं नास्ति, किन्तु नित्यानाचरणस्य प्रत्यवायहेतुत्वम्। तथा च शक्ययावदङ्गसहितप्रधानानाचरणस्य प्रत्यवायहेतुत्वं कल्प्यते नित्ये प्रतिनिध्युपदेशात्। अशक्तावन्नोत्सर्गमात्रेण श्राद्धनिर्वाहविधानाच्च शक्येति विशेषणम्।

एतच्च बोधकाभावे सतीति बोध्यम् । "यदि सोमं न विन्देत, तदा पूतीकानभिषुणुयात्" इति बोधकम् । तथा च सोमप्राप्त्या सङ्कल्पेन कर्मारम्भे सति यदि सोमापचारस्तदा पूतीको ग्राह्यः । आरब्धसमापनस्याऽऽवश्यकत्वात् । नतु प्रथममेव सोमालाभे पूतीकानादाय सङ्कल्प इति ।

५३ अथ तिर्यगधिकरणम्-

यथा जैमिनिसूत्रम्-"**तिर्यक्पङ्ग्वत्र्यार्षेयदेवानां कर्मसु नाधिकारः**" इति(१) । तिरश्चां विशिष्टज्ञानाभावात्, पङ्गोः प्रचरणशक्त्यभावेन 'उत्थाय पूर्णां जुहोति' इति कर्मणो बाधात्, त्र्यार्षेयेति-त्रय आर्षेया ऋषिधर्मा येषां ते त्र्यार्षेया अन्धमूकबधिराः । यथा-कश्चिदृषिः परद्रव्यादिवीक्षणे रागोत्पत्तिसम्भवेन नयने निमील्य तिष्ठति न किञ्चित्पश्यति । एवं कश्चिदृषिः परद्रोहमिथ्यावचनसम्भवेन यत्किञ्चिन्न वक्ति, मौनी तिष्ठति । तथा कश्चिदृषिः परनिन्दाश्रवणजन्यदोषपरिहाराय वनान्तं गत्वा तिष्ठति, किञ्चिन्न शृणोतीति । तथाचान्धस्य वीक्षणाभावात् 'यजमानवीक्षितं हविर्जुहोति' इत्यादिबाधात्, मूकस्य मन्त्रोच्चारणासामर्थ्यात्, बधिरस्य श्रोत्राभावेन लौकिकवैदिकव्यवहाराभावात्, देवानान्तु मन्त्रमयत्वेनाचेतनत्वात् । अत एव देवग्रामो हस्तिग्राम इत्यादयो गौणप्रयोगाः ।

**अत्र वदन्ति**—तिरश्चां विशिष्टज्ञानाभावात्, देवानां विग्रहशून्यत्वेनाचेतनत्वात्प्रसक्तिरेव नास्ति कथमधि-

(१) "कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते" (अ० ६ पा० १ अधि० २ सू० ५) इति पाठोऽन्यपुस्तकेषु ।

कारनिषेधः । अन्यथा (१)घटादीनामपि निषेधो बोध्येत । तत्राहुः-येषां तिरश्चां विशिष्टज्ञानमस्ति वालिसुग्रीवादीनां, तेषामनधिकारबोधनात् । देवानां तु विग्रहसत्त्वेन चैतन्यमस्त्येव "इन्द्रः सहस्राक्षः" इति श्रुतेः । किन्तु तेषामेकदा नानायागसान्निध्यासम्भवेन यागीयदेवतात्वासम्भवात् मन्त्रस्य देवतात्वमुच्यते । तथा च देवानां यागोद्देश्यत्वयागकर्तृत्वविरोधान्न कर्मण्यधिकारः ।

वस्तुतस्तु तिरश्चां वर्णाश्रमाभावादेवानधिकारः प्राप्त एव । देवानान्तु मध्ये यो यष्टा स स्वं विहायान्येषां करणे ऽविरोधात्, यथा कुण्डले ऽवघातबाधः । तथा स्वोद्देश्यकयागबाधेऽपि न कर्मवैगुण्यमिति । यत्र चान्यमात्रदेवतायागस्तत्र स्वाच्छन्द्येनाधिकारः । एवं दानेऽपि । अत एवेन्द्रादीनां महाभारतादौ यागश्रुतिरप्युपपन्नेति ।

### ५४ अथ पश्वधिकरणम्—

"पशुना रुद्रान् यजेत" इति श्रूयते । अत्र बहुरुद्रोद्देश्यक-एकपशुरनुचितो ऽतो रुद्रसमसंख्याः पशवो ग्राह्या इतिपूर्वपक्षे जैमिनिसूत्रम—"असति बाधे वैभक्तिकसंख्याया अत्यागात्" इति(२) । पशोर्विधेयतया तद्गतसंख्या विवक्षिता । रुद्रानिति बहुवचनेन साहित्येन देवतात्वबोधनाच्च प्रोक्षणे नानुपपत्तिः । रुद्रेभ्यः प्रोक्षयामीति सकृदेव प्रोक्षणादिति ।

### ५५ अथ सहसाहित्यविवेकः—

तुल्यक्रियाणां ( रूपाणां ) परस्परसापेक्षाणामेकक्रियार्हत्वं

---

( १ ) घटस्थजलप्रतिमादीनामिति यावत् ।

( २ ) एतदधिकरणसिद्धान्तसूत्रं-"शब्दवत्तूपलभ्यते, तदागमे हि तद् दृश्यते तस्य ज्ञानं हि यथा अन्येषाम्" ( अ० ४ पा० १ अधि० ५ सू० १५ ) भाष्यादिपुस्तकेषु ।

साहित्यम् । (१)अनेवम्भूत सहत्वमिति । तुल्यरूपत्वञ्च तत्क्रिया-न्वय्येकतरधर्मिविशेषणत्वेनान्यतरस्यानुपास्थितत्वम् । तेन—

"दामोदराय नमामि तुलायां लीलया सह ।
प्रदीपं ते प्रयच्छामि नमो ऽनन्ताय वेधसे" ॥

इत्यत्र सहत्वमेव दामोदरविशेषणत्वेन लीलाया उपस्थितेः। उक्तञ्च तुल्यरूपत्वं 'घटं पटञ्च पश्यति' इत्यत्राप्यस्ति एकस्याः क्रियायाः समूहालम्बनात्मिकाया विषयत्वात्, साहित्यं तु नास्त्यतः परस्परसापेक्षाणामिति । तत्क्रियान्वयियावद्धर्मिनिरूप्यधर्मोपस्थितिविषयाणामित्यर्थः ।"अग्नीषोमाभ्यां स्वाहा" इत्यादिलक्ष्ये द्वित्वादिः साधर्म्यम् । सहस्थले तु लीलायुतदामोदरत्वम् । तेन धर्मेणोभयोरुपस्थितिविषयत्वञ्च । चैत्रमैत्रौ स्वग्रामौ गच्छत इति वारणाय एकक्रियेति । तत्र गमनक्रियायाः प्रत्येकं समाप्तत्वात् । ननु तथापि द्वन्द्वेन कथं साहित्यबोधः ? वचनक्रियापेक्षया साहित्यात्, क्रियायां शब्दोपात्तत्वविशेषणाभावादिति ।

### ५६ अथ खलेवालीन्यायः—

सोमयागविकृतौ "खलेवाली यूपो भवति" इति श्रूयते । खलेवाली बलीवर्दबन्धनाय खले निखातस्य मेढिकाष्ठस्य संज्ञा । तथा च यूपधर्मा अष्टाश्रीकरणादयः अत्रापि कार्या इति(२) ।

---

(१) अतुल्यरूपाणामित्यर्थः ।

(२) वस्तुतस्तु खलेवालीस्वरूपभङ्गभिया अष्टाश्रीकरणतक्षणादियूपोत्पत्तिसाधनसंस्काराणां बाध एव । ये तु खलेवालीस्वरूपाविरोधिनो यूपसंस्काराः पर्यूहणादयस्ते एवात्र कार्या इति। स्पष्टश्चेदं सुबोधिन्यां दशमाध्याये ( पा० २ अधि० ३२ सू० ६९ )

५७ अथ प्रतिपत्त्यधिकरणम्—

"शकृत्संप्रविध्यति, लोहितं निरस्यति, गुदेनोपयजति, सर्वं जुहोति" इत्यग्नीषोमीयपशौ श्रूयते। शकृत्संप्रविध्यतीति दृष्टान्तार्थम्। यथा पशोरुदरवर्ति शकृत् त्यजति, तथा लोहितमपि त्यजति। अन्यत्र पशौ शीर्षमांसोपक्रमेण होमः। अत्र तु गुदमांसोपक्रमेणेति। तथा च "यज्ञशेषमृत्विग्भ्यो ददाति" इति परिभाषया मांसस्य उत्तरा प्रतिपत्तिः प्राप्ता। अत्र च सर्वप्रहरणेन प्रतिपत्त्यभावात्कर्मवैगुण्यं स्यादित्यत्र सिद्धान्तः—"यदि कारणानुपपत्तेः" इति। यदि प्रतिपाद्यं स्यात्तदा प्रतिपत्तिरङ्गमित्यर्थः।

५८ अथ आष्टमिकविकृत्यधिकरणम्—

दर्शदिवसमपेक्ष्याष्टमदिने क्रियते इत्याष्टमिकी विकृतिर्दर्शयागस्य। यथा श्रुतिः—"अष्टमे हि सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः" इति। अस्य यागस्येष्टित्वेन दर्शविकृतित्वम्। तथाच दर्शधर्मातिदेशेन षड्विधहोमद्रव्याङ्गकत्वं प्राप्तम्। तथा चात्र सौर्यमित्येकवचनश्रुतावपि चरुषट्कं कार्यं करणगतषट्त्वस्यापि प्राप्तत्वात् इति पूर्वपक्षे सिद्धान्तः—"एकोद्देश्यकत्वेनाकाङ्क्षितत्वात्" इति। अत्रैकदेवतायाः सूर्यस्योद्देश्यत्वेन एकचरुरेवाकाङ्क्षितः। अतो ऽतिदेशप्राप्तस्यापि षट्त्वस्य बाध एव। दर्शे तु षड्द्रव्यस्यैव देवताभिधानादिति।

५९ अथ धान्यमस्यधिकरणम्—

"धान्यमसि, इति तण्डुलानावपति" इति श्रूयते। अत्र मन्त्रलिङ्गेन धान्यप्रकाशनात्तण्डुलशब्दो धान्यपरः। युक्तश्चैतत्। तण्डुलपरत्वे ऽवघातबाधापत्तेरित्यत्र सिद्धान्तः—तण्डु-

लानिति द्वितीयया क्रियाजन्यफलस्य संस्कारविशेषस्य तण्डुले बोधनात् । मन्त्रलिङ्गेन चानुमितिद्वारा धान्ये संस्कारबोधः, तस्य च विलम्बितत्वात् । यथा—इदमावपनं धान्यनिष्ठसंस्कारजनकं धान्यप्रकाशकमन्त्रकरणत्वादिति । तथा च श्रौतान्वयबोधबलात्तण्डुलस्य कर्मत्वे प्राप्ते कृष्णलन्यायेनावघातबाधो न दोषाय । तथा च मन्त्रे धान्यपदं लक्षणया तण्डुलपरमिति ।

६० अथ ऊहाधिकरणम्—

"अग्नये त्वा जुष्टं निर्वपामि" इति मन्त्रः प्रकृतौ श्रुतः । तथा विकृतौ सौर्यचरावपि अग्नये इत्येव पाठ्यं लक्षणया च सूर्यपरं, न तु सूर्यायेति । वेदे तथाश्रुतेः कल्पने च मन्त्रत्वव्याहतेरित्यत्र सिद्धान्तः—"अतिदेशादेवोपपत्तेः" इति । अयमर्थः—यथा मन्त्रो ऽतिदेशप्राप्तः तथा मन्त्रगतसमवेतार्थत्वमपि प्राप्तं, तच्चोहं विना ऽनुपपन्नम् । तथा च यो मन्त्रः प्रकृतौ समवेतार्थकः स मन्त्रो विकृतौ यद्यसमवेतार्थकः, तदा समवेतार्थकपदप्रक्षेपः प्रयोज्य इति । ऊहश्चासमवेतार्थकपदत्यागपूर्वकसमवेतार्थपदसमभिव्याहारकरणम् । यस्तु प्रकृतावप्यसमवेतार्थकस्तस्य नोहः । यथा 'एतद्वः पितरो वाम' इत्यस्य पार्वणप्रकृतावसमवेतार्थकत्वादेकोद्दिष्टेऽपि नोहः ।

ननु धान्यमसीति मन्त्रेऽपि तण्डुलपदोहोऽस्तु । नच तत्र लक्षणयैवोपपत्तिरिति वाच्यम् । "अग्नये त्वा जुष्टमित्यत्रापि तथात्वापत्तेरित्यत्र सिद्धान्तसूत्रम्—"न प्रकृतावूहो ऽपूर्वत्वात्" इति । अपूर्वत्वादुपदेशविधिप्राप्तत्वात् । अयम्भावः—प्रकृतावूहे तत्र मुख्यपदं विहाय ऊह्यपदमेव वेदे प्रयुज्येत मुख्यपदस्य निष्प्रयोजनत्वात् । नन्वेवं "शब्दे ऽविप्रतिपत्तिः" इति कात्यायनसूत्रविरोधः । मुख्यशब्दप्रयोगे न कस्यापि विप्रतिपत्तिः—न

वैयर्थ्यमिति तदर्थत्वादिति, मैवम् । तत्सूत्रस्य प्रतिनिधित्वेन गृहीतपदार्थवाचकपदप्रयोगनिषेधार्थकत्वात् । यथा व्रीहिप्रतिनिधिशालिग्रहणे "व्रीहिर्यज्ञेषु कल्पताम्" इति मन्त्रे शालिप्रोहाभावः । एतदपि मन्त्रे बोध्यम् । वाक्ये तु प्रतिनिधिरेवोह्यः । यथा मृताहप्रतिनिधावेकादश्यां श्राद्धे एकादशीत्वेन प्रयोगो न तु मृततिथित्वेनेति । अग्नये त्वा ऽजुष्टमिति। अग्निमुद्दिश्य त्वा—त्वाम्, अजुष्टम्—अयातयामं, प्रोक्षामीत्यर्थः ।

६१ अथ पाशाधिकरणम्—

दैक्षयागे श्रूयते "पाशेन पशुं बध्नाति, अथ प्रोक्षति, तिष्ठन्तं पशुं प्रयजति,ततः पाशं छिनत्ति, अदितिः पाशं प्रमुमोक्त्वेतम्, अदितिः पाशान् प्रमुमोक्त्वेतान्" इति । ततस्तद्विकृतियागे श्रूयते "पाशाभ्यां पशुं बध्नाति" इति । अत्रातिदेशागतौ पूर्वोक्तपाशच्छेदनमन्त्रौ । ततः प्रथममन्त्रे पाशमित्यत्रैकवचनस्थाने द्विवचनोहः कार्यः । द्वितीयमन्त्रे तु पाशानिति बहुवचनं प्रकृतावप्यसमवेतार्थकम्, अतस्तस्य विकृतियागेऽपि नोहः । अदृष्टार्थकत्वेन पाशानित्येव पाठ्यमिति सिद्धान्तः । वस्तुतस्तु पाशानिति संसारपाशकामक्रोधादिपरमिति । तिष्ठन्तमिति यागान्तरे पशुघातानन्तरं प्रयाजाचरणम् । अत्र तु पशौ जीवति । तथा च प्रयाजापकर्षे तदन्तकर्मकलापापकर्ष इति ।

६२ अथ कालशौचाधिकरणम्—

ननु शौचस्याङ्गत्वेन तदभावेऽपि नित्यानुष्ठानं कर्तव्यमेव । किञ्चिदङ्गहान्याऽपि तस्येष्टत्वात् । एवममावास्यायामतीतायामपि श्राद्धं कार्यममावास्याया अङ्गत्वादङ्गबाधेऽपि नित्यानुष्ठानादित्यत्र सिद्धान्तः—"पुरुषविशेषणत्वान्नैवम्" इति । अयमर्थः—'काले कुर्याच्छुचिः कुर्यात्' इतिश्रुत्या शौ-

त्वमधिकारिविशेषणं तदभावेऽधिकाराभावान्न कर्माऽऽचरणम्। एवं विहितकालजीवनस्याधिकारिविशेषणत्वात्कालो ऽप्यधिकारसम्पादक इति। एतन्न्यायमूलकमेव 'सन्ध्यां पञ्च महायज्ञान्' इत्यादिवचनमिति ॥

६३ अथ हेतुमन्निगदाधिकरणम्—

हेतुमन्निगदः—सहेतुकं वचनम्। यथा "अग्निं यजेत्, स हि आशुतोषो, यथेष्टदाता" इति। अत्राऽऽशुतोषत्वादिकथनादाशुतोषत्वादिनाऽग्नेर्देवतात्वमन्यथा तद्वचनवैयर्थ्यादित्यत्र सिद्धान्तसूत्रम्—"प्ररोचनायोपपत्तेः" इति(१)। अयमाशयः—स हि आशुतोष इति हेतुमन्निगदः तस्य प्ररोचनार्थेनोपपत्तेः। प्ररोचना स्तुतिः। अग्नियागे झटिति प्रवृत्त्यर्थं हेतुमन्निगदोऽग्निं प्रस्तौतीति।

६४ अथाऽऽरुणीन्यायः—

"अरुणयैकहायन्या गवा सोमं क्रीणाति" इत्यनन्तरं "वाससा क्रीणाति" इति श्रूयते। अत्र च विकल्पो युक्तः। गवा वाससा वा सोमक्रयः कार्य इति। अत्र सिद्धान्तः—"गुणत्वेनैककर्म्यसिद्धेः" इति(२)। पूर्ववचनेन प्राप्ते ऽरुणैकहायनगोकरणकसोमक्रये फलाधिक्याय वासोलक्षणगुणविधिरेवेति ॥

६५ अथ सोमयाजिन्यायः—

यागविशेषे श्रूयते "सोमेन दधिपयोभ्याञ्च यजेत" इति। अत्र सोमस्य दधिसहितपयसश्चोभयोरपि प्राधान्यं यद्यप्युचितं तथापि "असोमयाजी न सोमेन" इति श्रुत्या ऽकृतसोम-

(१) "अर्थस्तु विधिशेषत्वाद्यथा लोके" इति सूत्रं (अ० १ पा० २ अधि० ३ सू० २९) इति दृश्यते।

(२) "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्" इति सूत्रं (अ० ३ पा० १ अधि० ६ सू० १२) इति दृश्यते।

यागस्य सोमनिषेधात् न सोमस्य प्राधान्यमत्र, किन्तु दधिपयसोरेव। अत्र सिद्धान्तः—"निमित्ताद्व्यतिरेके प्राधान्याविरोधात्" इति। सोमयागाकरणनिमित्तात्सोमस्य व्यतिरेकेऽपि न प्राधान्यबाधः। तथा च सोमयाजिनां यागे उभयस्यैव प्राधान्यम्। असोमयाजिनां तु प्रधानीभूतस्य सोमस्य बाधः। नहि बाधेन तस्य प्राधान्यं दूरीक्रियते इति।

ननु सोमस्याङ्गत्वमस्तु, मैवम्। तर्हि तद्विकृतियागे ऽतिदेशात्सोमप्राप्तिः स्यात्। प्रधानत्वे तु तस्यातिदेशो न सम्भवति प्रधानातिदेशे तद्यागस्य प्रकृतयागत्वमेव स्यात् वैलक्षण्याभावात्। तथा चाङ्गानामेवातिदेशः। तेषामुपकारकत्वात् प्रधानस्य चोपकार्यत्वात् कथं यजेतेत्याकाङ्क्षायामतिदेशः। तथा च कथमित्यस्य केनाङ्गेनेत्यर्थत्वादङ्गानामेवातिदेश इति। अत एव दीक्षणीयादियागे "अप्रयाजास्ता" इति श्रूयते। तत्र आहुतयो ऽप्रयाजाः प्रयाजरहिताः कार्या इत्यप्राप्तप्रयाजनिषेधानुपपत्त्या दर्शधर्माणामतिदेशः कल्प्यते, नतु दर्शप्रधानीभूतानामाग्नेयादीनां त्रयाणामिति॥

६६ अथाक्ताधिकरणम्—

"अक्ताः सिता जुहुयात्" इति श्रूयते। तत्र केनाक्ता इत्याकाङ्क्षायामेतत्प्रकृतियागे 'दध्ना जुहोति' इति श्रुतेर्दध्नैवाक्ताः सिता इति प्राप्यते। अत्र सिद्धान्तः—"वाक्यशेषे घृतस्तुतेः" इति। अस्य यागप्रकरणस्योपसंहारे 'तेजो वै घृतम्" इति घृतस्तुत्यन्यथाऽनुपपत्त्या घृतेनैवाक्ता इति बोध्यते। नच व्याहृतिहोमाद्यर्था घृतस्तुतिः तस्य सर्वत्राऽऽज्यकरणत्वेन स्तुतेर्वैयर्थ्यात्॥

६७ अथाऽऽमिक्षाधिकरणम्—

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति, वाजिभ्यो वाजिनम्" इति श्रूयते । अत्युष्णदुग्धेऽम्लदधियोगेन क्षीरभागः कठिनो भवति, नीरभागश्च भवति । तत्र क्षीरभाग आमिक्षा, सा विश्वेदेवदेवताका । नीरभागो वाजिनं तद्वाजिदेवताकम् । वाजं होमद्रव्यमामिक्षारूपमस्तीति वाजी इति योगार्थेन उपस्थिता विश्वेदेवा एव बोध्यन्ते । यथा 'बृहस्पतिर्विश्वेदेवैः' इत्यत्र विश्वशब्दस्य सर्वार्थतयोक्तसर्वदेवैरिति योगार्थाऽऽदरो नतु रूढ्या विश्वदेवगणग्रहणं, तथाऽत्रापि ।

अन्ये तु योगाद्रूढेर्बलवत्त्वात् वाजिपदेन सूर्याश्वा एवोच्यन्ते । बृहस्पतिर्विश्वेदेवैरित्यत्र प्रकरणाद्योगार्थाऽऽदरः । नचात्र तथा । तथाच कर्मभेद एवेति वदन्ति ।

६८ अथाभ्युदितेष्टिन्यायः—

अभ्युदितेष्टिकालः सूर्योदयकालः । सच मुहूर्तात्मकः । यथा—

सन्धिर्दिनरजन्योश्च उदयास्तमयौ तथा ।
दिवारात्र्योस्तथार्द्धञ्च मुहूर्ताः समुदाहृताः ॥

तथा च मुहूर्तात्मके उदयसमये साङ्गष्ट्यनिष्पत्तेः कथं तत्र प्रवृत्तिः । अत्र सिद्धान्तः—"कालस्यारम्भ एवोपयोगात्" इति । अयम्भावः—विहितकालजीवित्वेनाधिकारित्वात्कालोऽधिकारसम्पादकः । तथा चाधिकारस्य आरम्भ एवोपयोगः । शुचित्ववत् । अन्यथा आरम्भानन्तरमशौचे कर्मवैगुण्यं स्यात् । 'आरब्धे सूतकं न स्यात्' इत्यपि वचनमेतन्न्यायमूलकमेव । तथा च—

काले खलु समारब्धमकालेऽपि समापयेत् ' इति ।

केचित्तु प्रधाननिष्पत्तिपर्यन्तं कालापेक्षाऽस्त्येव, उत्तराङ्गे

त्वपेक्षा नास्ति कालस्याधिकारत्वे ऽप्यङ्गत्वात् । अङ्गत्वञ्च प्रधाननिष्पत्त्यैव चरितार्थमिति वदन्ति ।

६९ अथ हविरुपलक्षणाधिकरणम्—

"यस्य निरुप्तं हविश्चन्द्रमा अभ्युदियात्, स त्रेधा तण्डुलान् विभजेत्, व्याहृतिभिर्जुहुयात्" इति दर्शयागे श्रूयते । "आग्नेयोऽष्टाकपालो भवत्यमावास्यायाम्" "ऐन्द्रं दधि" "ऐन्द्रं पयः" इत्यनेनामावास्यायां दध्यारम्भो विहितः । दध्नश्च व्यहसाध्यत्वात् यागो नाऽमावास्यायां, किन्तु तदुत्तरदिने । तत्र चापराण्हे द्वितीयावेधे सति न यागः, किन्तु पूर्वदिने एव । तथा च दध्यारम्भोऽपि यागपूर्वदिने । तथा च द्वितीयाविद्धप्रतिपदि यागकरणे प्रायश्चित्तार्थमाह—यस्य निरुप्तमिति । यस्य हविर्निरुप्तं पूर्वाण्हे यागो निष्पन्नः । अथ च दिवा द्वितीयावेधाधीनस्तद्दिने सायं चन्द्रोदयो भवति स महाव्याहृतिहोमरूपप्रायश्चित्ताय चर्वर्थं त्रेधा तण्डुलान् विभजेत् । अत्र च "देवतातो हविर्विभजेत्" इति चोपसंहारे श्रूयते । दर्शे या देवतोद्देश्या तस्या यद्धविस्तद्विभजेदित्यर्थः । तेन दधिपयसोरपि त्रेधा विभागः प्राप्तः । तथा च तण्डुलानिति पदं हविरुपलक्षणार्थमिति । तथा च कात्यायनः—

पर्वणयोश्चतुर्थांश आद्याः प्रतिपदस्त्रयः ।
यागकालः स विज्ञेयः प्रातरुक्तो मनीषिभिः ॥

तेन यागपरद्दिने प्रायश्चित्तार्थं दधिपयस्तण्डुलान् समानीय प्रत्येकं त्रेधा कृत्वा व्याहृतिभिः प्रत्येकं जुहुयादिति ।

७० अथ प्राणाधिकरणम्—

"वेधसे वैधस्या जुहोति" इति श्रूयते । वैधस्या वेधःप्रका-

शिकया ऋचेत्यर्थः । वेधःशब्दवाच्यो विरिञ्चिर्विष्णुश्चेति । अत्र सन्देहे प्रवृत्त्यनुपपत्तिरित्यत्र सिद्धान्तः—"प्राणशब्दवत् ख्यातत्वात्" इति । अयमर्थः–उपासनाकाण्डे 'प्राणोऽस्मीति स्वं चिन्तयति' इति श्रुतिरस्ति । तत्र प्राणशब्दस्य प्रयोग इन्द्रे इन्द्रिये जीवे वायौ ब्रह्मणि च दृश्यते । यथा—

'इन्द्रेन्द्रियब्रह्मजीववायुषु प्राण इष्यते' इति ।

तत्र बहुप्रयोगो ब्रह्मणि । यथा "सोऽयं प्राणमयः" इति, "प्राणः सर्वं विभावयति" इति, "प्राणो ह्यानन्दमयः" इति । तथा च प्रयोगप्राचुर्यात् प्राणोऽस्मीति ब्रह्मपरम् । तथा वेधःशब्दस्य विरिञ्चौ ख्यातत्वेन बहुप्रयोगाद्विरिञ्चिरेव वेधःशब्दार्थ इति ।

### ७१ अथ विविदिषदधिकरणम्—

"तमेवात्मानं ब्रह्मणा विविदिषन्ति यज्ञेन दानेन तपसा नाशकन" इतिश्रुत्या आत्मज्ञानफलको ऽग्निहोत्रादिर्यज्ञः प्राप्तः । "यावज्जीवमग्निहोत्रं जुहोति" इतिश्रुत्या नित्यमपि तत्प्राप्तम् । तथा च विविदिषुभिर्गृहस्थैर्वारद्वयमेतत्कर्तव्यम्, मैवम् । ब्रह्मज्ञानार्थं तत्करणेनैव नित्यस्यापि निष्पत्तेः । नच नित्यानित्यवैषम्यम् । काम्यकरणेनैव नित्यस्यापि सिद्धिरिति प्रसङ्गन्याय एवात्र । यथा निमन्त्रितो ब्राह्मणो भुक्त्वा परकीयश्राद्धं, स्वतृप्तिञ्च निष्पादयतीति ।

गुरुमते तु काम्यापूर्वनित्यापूर्वयोरेकविधिबोध्यत्वासम्भवादावृत्तौ वाक्यभेदापत्तेर्नित्यस्य फलश्रुतिः स्तुतिरूपैव, नतु नित्यस्य सकामाधिकारित्वमिति ।

### ७२ अथ स्मृत्यधिकरणम्—

स्मृतेर्वेदमूलकत्वानुमानादेव निष्कम्पप्रवृत्तिजनकत्वम् ।

अन्यथा पौरुषेयत्वेन भ्रमादिमूलकत्वशङ्कया तन्न स्यात् । तथाहि—इयं स्मृतिः स्वसमानार्थकवेदमूला, असम्भवन्मूलान्तरत्वे सति समूलत्वात्, प्रत्यक्षवेदमूलकस्मृतिवत् । एवञ्च वेदमूलकत्वानुमानादेवावच्छेदकतया वाक्यार्थसिद्धेः श्रुतेर्न प्रमाजनकत्वमित्यत्र सूत्रम्—"अकारणत्वादर्थस्य" इति । कार्येण स्मृत्या कारणस्य वेदस्यानुमाने ऽकारणत्वात् पदार्थस्यैव नानुमानविषयत्वं कुतो वाक्यार्थस्येति । अकारणस्य तद्विषयत्वे ऽतिप्रसङ्गात् ।

नचैवं कुतो विशिष्टप्रतीतिः ?, अर्थविषयकेण तटस्थपूर्वज्ञानेन भेदाग्रहाद्विशिष्टधीव्यवहारः । पाककृतौ मानसप्रत्यक्षायां पाकविशिष्टधीव्यवहारवत् । बहिर्विषयके मनसो ऽस्वातन्त्र्यात् । मीमांसकमते ज्ञानस्याप्रत्यासत्तित्वादिति ॥

७३ अथ ज्योतिरधिकरणम्—

"अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरनेन सहस्रदक्षिणेन यजेत" इति श्रूयते । तेन ज्योतिष्टोमयागस्य त्रैविध्यं नामत्रयविधानात् । 'गोशतं दक्षिणा' इत्यनेन च दक्षिणा विहिता प्राक् । अनेन सहस्रदक्षिणाख्यो गुणो विधीयते । तथा चानेनेतिपदात् त्रयाणामप्युपस्थानात् त्रिष्वेव सहस्रदक्षिणागुण इत्यत्र सिद्धान्तः—"अथ पदेन च्छेदात्" इति(१) । अथैष सर्वज्योतिरित्यत्रस्याथपदेन पूर्वोक्तव्यवच्छेदादनेनेतिपदेन सन्निहितसर्वज्योतिर्याग एवोक्तस्तत्रैव सहस्रदक्षिणेति ।

७४ अथ वैश्वानराधिकरणम्—

" वैश्वानरमुपास्ते विद्युदादिसत्राय्वाकाशोदकपृथिव्या

(१) संज्ञा चोत्पत्तिसंयोगात्" (अ० २ पा० २ अधि० ८ सू० २२) इति सूत्रं सूत्रपाठेऽस्ति ।

त्मकैः षड्भिरुपेतम्" इति । अत्र विद्युदादिरूपेण वैश्वानरस्य चिन्तनमुक्तम् । अत्र किं समुदायरूपेण चिन्तनं प्रत्येकं वा ?, इति संशये सिद्धान्तः—"साहित्यश्रुतेः" इति । बहुवचनेन साहित्यबोधनात् समुदायरूपेणैव चिन्तनमिति । यथाह भट्टः—"साहित्यं द्विवचनबहुवचनाभ्यां द्वन्द्वसमासाच्च"इति । ननु "आदित्येभ्यो जुहोतीत्यादित्यो वै देवता" इति श्रुत्या साहित्येन चतुर्थ्या देवतात्वबोधोऽस्तु, मैवम् । नहि देवतात्वे चतुर्थ्याः शक्तिः किन्तु चतुर्थ्या देवतायामनिराकर्तृकसम्प्रदानत्वान्यथाऽनुपपत्त्या तत् कल्पनीयं, तत्र च बाधकं देवता इति बहुत्वश्रुतिः । तथा च भाष्यम्—'बहुत्वस्य पृथग् निवेशितत्वात्' इति । अस्यार्थः—पृथक्पदं तृतीयान्तं परस्परभिन्नस्वाश्रयार्थकं तेन परस्परभिन्नस्वाश्रयैर्निवेशितत्वात् बुद्धावर्पितत्वात् । प्रकृत्यर्थतावच्छेदकविशिष्टयावत्स्वाश्रयनिरूपणत्वादिति यावत् । तथा च देवता इति बहुवचनेन प्रत्येकं देवतात्वावगम इति । निराकर्तृकं "मा दद्या" इति निषेधवचनं तन्नास्ति यस्य सम्प्रदानस्य तदनिराकर्तृकमिति । अनिराकर्तृकसम्प्रदानस्यार्थः ॥

७५ अथ गुणविकृत्यधिकरणम्—

"एष एव विधिर्यत्र कुत्रचिद्धोमे" इत्यनेन कुशकण्डिकाकर्मातिदेशादग्निष्टोमे 'शरमयं बर्हिर्भवति' इत्यनेन किं विधातव्यमास्तरणार्थं कुशस्य प्राप्तत्वादित्यत्र सिद्धान्तः—"गुणविकृतिभावात्" इति । अयमर्थः—गुणस्य प्राप्तकुशस्य विकृतित्वं तत्कार्यकारित्वं शरस्य विधीयते । तथा च शरा आस्तरणीया नतु कुशाः । नचैवं "दध्ना जुहोति" इति स्थलेऽपि प्रकृतियागातिदेशप्राप्तचरुस्थाने दधिविधानं स्यादिति वाच्यम् । तत्र 'दध्नेन्द्रियकामस्य' इति श्रवणात् गुणफलत्वं, नतु गुणविकृति-

त्वम् । दध्नो गुणविकृतित्वे कदाचिदपि चरुस्तत्र न स्यादिति ॥

७६ अथ क्रमः—

यथाऽऽह भट्टः—

"श्रुत्यर्थपठनस्थानमुख्यप्रावृत्तिकाः क्रमाः" इति ।

तत्र श्रौतक्रमो यथा—"त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति" इत्यत्र क्त्वाश्रुत्या आनन्तर्यं बोध्यते । त्रिवृता—त्रिगुणात्मककुशमेखलया परिवीय—परिवेष्ट्य सवनीयं—सोमाङ्गकम् उपाकरोति—आलभते इत्यर्थः ।

अत्र केचित्—क्त्वाप्रत्ययेन परिव्यानस्याङ्गत्वं बोध्यते । तेन पशूपाकरणस्याङ्गं परिव्यानमिति वदन्ति, तन्न । उभयोरपि मुख्ययागाङ्गतया "गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यात् ( अ० ३ पा० १ अधि० १२ सू० २२ ) इति न्यायात् । अत एवाग्नीषोमीययागे "यूपं परिवीयाग्नीषोमीयं पशुमुपाकरोति, ततः सवनीयम्" इत्यभिधाय तद्विकृतियागे उक्तं "नात्राग्नीषोमीयमालभते, आश्विनग्रहं गृह्णाति" इति । तेनात्र यूपपरिव्यानानन्तरमाश्विनग्रहग्रहणं, ततः सवनीयपशूपाकरणम् । यदि परिव्यानं सवनीयपशूपाकरणाङ्गं स्यात्तदा मध्ये आश्विनग्रहग्रहणं नोच्येत इति ।

यथा वा "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इति ।

अर्थक्रमो यथा—"अग्निहोत्रं जुहोति" "यवागूं पचति" इति । अत्र पाठक्रमादग्निहोत्रस्य पारिभाषिकस्याऽऽदावनुष्ठाने यवागूपाकस्य निरर्थकत्वं स्यात् । तथा च कथं जुहोतीत्याकाङ्क्षायां यवागूपाकोपदेशः । तेनाऽऽदौ यवागूपाकः कार्यः । ततस्तया होमः । अर्थो युक्तिस्तेन क्रमो ऽर्थक्रमः । इदमग्निहोत्रं कर्मान्तरं पूषदेवताकम्, अग्निहोत्रकर्मप्राप्त्यर्थं तत्प्रयोगः । यवागुस्तु

पिष्टचरुरिति ।

**पाठक्रमो यथा**—"इन्द्राय जुहोति", "अग्नये जुहोति" इत्यादौ । यथा वा मातृपूजानन्तरं वसुधारादानम् । यथा च स्नानतर्पणयोर्मध्ये सन्ध्यावन्दनपाठात् मध्ये एव तदाचरणमिति ।

**स्थानक्रमो यथा**—एकोद्दिष्टे पार्वणधर्मातिदेशात् कुशासनाद्यनुष्ठानं कर्तव्यम् । तत्र पार्वणे यस्मिन् स्थाने यत् क्रियते एकोद्दिष्टेऽपि तथा । तेन नाऽनध्यवसायः केन क्रमेण कर्तव्यमिति । स्थानपदेनाऽऽदिमध्यावसानमुच्यते ।

**मुख्यक्रमो यथा**—ग्रहयागे ऽधिदैवतप्रत्यधिदैवतपूजनं केन क्रमेण कार्यमित्याकाङ्क्षायां मुख्यपूजनानन्तरमेव कर्तव्यमुत्पत्तिविधौ मुख्यस्य प्रथमोपस्थितत्वादिति ।

**प्रावृत्तिकक्रमो यथा**—वाजपेये "सप्तदश प्राजापत्यान् पशूननक्ति, आलभेत" इति श्रूयते । तत्र च सप्तदशानामञ्जने इच्छया क्रमो, ऽभ्यञ्जनन्तु अञ्जनप्रवृत्तिक्रमेण कर्तव्यमेवमालम्भनञ्चेति । एवं श्राद्धे पितृपितामहादिपात्रक्रमेण संस्रवग्रहणं पितृपात्रे कर्तव्यम् । एवं बलिच्छेदनमुत्सर्गक्रमेणेति ॥

**७७ अथ (१) श्रुतिलिङ्गादिन्यायः—**

यथाऽऽह—जैमिनिः "**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्**" ( अ० ३ पा० ३ अधि० ७ सू० १४ ) इति । श्रुत्यादिन्यायानामेकविषये प्रसक्तावुत्तरोत्तरन्यायस्य दौर्बल्यं पूर्वमपेक्ष्योत्तरस्य विलम्बेनार्थोपस्थापकत्वादित्यर्थः । एषां लक्षणमुक्तं भाष्ये । यथा—

---

( १ ) क्वचित् समवाये विरोधन्याय इति पाठः ।

श्रुतिर्द्वितीया, (१)क्षमता च लिङ्गं,
वाक्यं पदान्येव तु संहतानि ।
सा प्रक्रिया या कथमित्यपेक्षा,
स्थानं क्रमो, योगबलं समाख्या ॥ १ ॥

कारकविभक्त्यात्मकाद्वितीया(२)श्रुतिः, तया कर्मगतं क्रियाफलाश्रयत्वं बोध्यते । तत्र क्रिया ( गमनादिः ) शेषः साधनत्वात् ( ग्रामप्राप्तेरित्यर्थः ) । क्रियाफलाश्रयः शेषी साध्यत्वात् । तथा च शेषशेषिबोधकत्वाद् द्वितीयाया बलवत्त्वम् । मासमधीते इत्यादिवारणाय कारकविभक्तीति(३)। उपपदविभक्ती-नान्त्वन्तर्भावितपदसापेक्षत्वाद् विलम्बितत्वम् । वेदान्तटीकायां **वाचस्पतिमिश्रास्तु** कारकविभक्तिमात्रं श्रुतिः, सर्वासामेव विभक्तीनां प्रकृत्यर्थस्वार्थबोधे ऽन्यानिरपेक्षत्वाद् बलवत्त्वमिति वदन्ति ।

लिङ्ग्यते ज्ञाप्यते ऽनेनेति लिङ्गं मन्त्रः । बोधकपदघटितमन्त्रस्यार्थप्रकाशनसामर्थ्यं लिङ्गत्वम् । यथा—बर्हिर्देवसदनं दामि” इत्यस्य मन्त्रस्य 'दाप् लवने' इतिधातोर्दामीति सिद्धत्वाद्बर्हिच्छेदनप्रकाशकत्वेन तत्रैव विनियोगः । वाक्यं परस्परसाकाङ्क्षपदकदम्बः । प्रकरणन्तूत्पत्तिविधिना प्रधानबोधानन्तरं केन प्रकारेण कर्तव्यमित्याकाङ्क्षाऽङ्गाभिधानप्रयोजिका । स्थानं क्रमः, स च तत्सान्निध्ये पठितत्वम् । समाख्या योगार्थेन प्रवृत्तं पदम् ।

यथाऽऽह भट्टः—

---

( १ ) शब्दसामर्थ्यमित्यर्थः ।

( २ ) यथा “व्रीहीनवहन्ति” इत्यत्र द्वितीयाश्रवणमात्रेण व्रीहीणामवहननक्रियायां विनियोगो ऽवगम्यते ।

( ३ ) “कालाध्वनोरत्यन्तसंयोगे” इति सूत्रविहितद्वितीयाया उपपदविभक्तित्वात् ।

अभिधातुं पदे ऽन्यस्मिन्ननपेक्षो रवः श्रुतिः ।
सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते ॥
संहत्याऽर्थं ब्रुवन्वृन्दं पदानां वाक्यमिष्यते ।
प्रधानवाक्यस्याङ्गोक्त्या ऽऽकाङ्क्षा प्रकरणं मतम् ॥
स्थानं समानदेशत्वं समाख्या यौगिको वरः ।

इति श्रुत्यादिलक्ष्मोक्तं मीमांसापारदर्शिभिरिति । वरः-शब्दः सर्वत्राभिधीयते इत्यन्वयः । समानदेशत्वं—सान्निध्यम् ।

**तत्र श्रुतिर्यथा**—"ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति द्वितीयया गार्हपत्याग्निगतं क्रियाजन्यप्रीतिफलाश्रयत्वं साक्षाद् बोधितम्। तथा च तस्य देवतात्वं श्रुतिप्राप्तम् । ऐन्द्र्येति इन्द्रप्रकाशिकाया ऋचः करणत्वं बोधितम् । तथा च विरोधः । नह्यन्योपस्थापकमन्त्रेणान्यस्योपस्थानं विहितं, तेनैकलक्षणा ऽऽवश्यकी । तत्र च गार्हपत्यपदे नेन्द्रलक्षणा । तद्देवतात्वस्य श्रौतत्वात् । लिङ्गेन तु देवतात्वं विलम्बबोध्यम्—इदमुपस्थानमिन्द्रदेवताकमिन्द्रप्रकाशकमन्त्रकरणत्वात्, ततः श्रुतिकल्पनम् 'ऐन्द्र्या इन्द्रमुपातिष्ठते' इत्यनुमानाधीनत्वात् । अत इन्द्रपद एव गार्हपत्यलक्षणा। स च मन्त्रः 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इति । एवं "पायसेन दध्ना जुहोति " इति श्रुतिः । पायसेन—पयः प्रकाशकेन मन्त्रेण, पयः पृथिव्यामित्यादिना । तथा च दधिनिष्ठं करणत्वं श्रौतं, पयोनिष्ठञ्च लिङ्गादनुमेयमिति लिङ्गं दुर्बलमिति ।

**लिङ्गस्य वाक्याद्बलवत्त्वं यथा**— "पुरोडाशं श्रपयेत्" इत्यनन्तरमङ्गाकाङ्क्षायां "स्योनं ते सदनं कृणोमि, घृतस्य धारया सुषेवं कल्पयामि । तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध(१) सुमनस्यमान"इति श्रूयते । अत्र कल्पयामीत्यन्तेन पूर्वांशेन

(१) सारभूतेत्यर्थः ।

पुरोडाशसदनकरणस्य प्रकाशः । उत्तरांशेन सादनस्य प्रकाशनम् । तथा च मन्त्रलिङ्गताद्द्वयप्रकाशः । एवं तस्मिन्निति श्रुत्या यदिति पदं कल्प्यम् । यत्सदनं कल्पयामि, तस्मिन् सीदेत्येकवाक्यतया एक एव मन्त्रः सादनमात्रे वाक्येन विनियुज्यते इति लिङ्गवाक्ययोर्विरोध, इति चेन्न । लिङ्गस्य वाक्यतो बलवत्त्वात् । तथाहि यत्पदं श्रुतं नास्ति, किन्तु तत्कल्पयित्वा एकवाक्यतया लिङ्गं कल्पनीयम् । तत्कल्पने तु प्रमाणाभावः । तद्विना च एकवाक्यता नास्त्येकार्थप्रतिपादकत्वाभावात्, सदनसादनयोः प्रतिपादकत्वात् । अत एव सूत्रम्—"अर्थैक्यादेकं वाक्यं साकाङ्क्षं चेद्विभागः" इति । शीघ्रोपस्थापकं लिङ्गम्" इति च ।

**वाक्यप्रकरणयोर्विरोधो यथा**—ज्योतिष्टोमप्रकरणे श्रूयते "तिस्रः सान्नाय्यस्योपसदो द्वादशाहीनस्य" इति । अत्र च उपसत्—सतिलव्रीहिचरुः । सान्नायो—ज्योतिष्टोमविशेषः । अत्र च ज्योतिष्टोमप्रकरणीयत्वेनाहीनपदं 'न हीनम्' इतियोगार्थेन सान्नाय्यपरम् । न च तत्रोपसत्त्रयविधिरस्त्येवेति वाच्यम् । एकवाक्यतया पञ्चदशोपसद्विधानात् । एवं वाक्येन चाहीनपदस्य रूढ्या ज्योतिष्टोमविकृतेरहीनाख्ययागस्योपस्थितिः तत्रैव द्वादशोपसदः, इति विरोधे सिद्धान्तः—योगाद्रूढेर्बलवत्त्वेन रूढपदघटितवाक्याच्छीघ्रं यागविशेषस्योपसदङ्गत्वप्राप्तिः, नतु प्रकरणानुरोधात् योगार्थस्याऽऽदरः । अहीनविषये प्रकरणस्य 'ज्योतिष्टोमः कथम्' इत्याकाङ्क्षाकल्पनाधीनप्रवृत्तिकत्वेन विलम्बितत्वादिति । अन्यप्रकरणमध्ये ऽपि प्रसङ्गादन्यनिरूपणं क्रियते इति ग्रन्थरीतिः । यथा छन्दोगपरिशिष्टे आभ्युदयिकप्रकरणे प्रसङ्गात्कतिचित्पार्वणधर्मा उक्ता इति । यथा वा दर्शप्रकरणे

ब्राह्मणावगोरणादेर्दोषमुक्त्वाऽऽह—श्रुतिः—'तस्माद् ब्राह्मणो नावगोरयितव्यो नापि ताड्य' इत्यादि। अत्र प्रकरणाद् ब्राह्मणानवगोरणं तद्हननादि च श्रुत्या दर्शाङ्गतया बोधितम्। तथा चान्यत्र न नियम इति, तन्न। वाक्यात्प्रकरणस्य दुर्बलत्वात्। तथा च सर्वदैव निषेधः। नच तत्प्रकरणपाठः किमर्थ इति वाच्यम्। प्रसङ्गसङ्गत्या तत्पाठात्॥

प्रकरणस्थानयोर्विरोधो यथा—

राजसूये सर्वे एव इष्टिपशुयागा अङ्गत्वं प्राप्ताः। तत्राभिषेचनीयाख्यस्य सोमयागविशेषस्य सन्निधौ श्रूयते "अक्षैर्दीव्यति, राजन्यं जिनाति, शौनःशेफं शृणोति" इति। शौनःशेफं—शुनःशेफमुनेश्चरितं पुराणोक्तम्। अत्र चाक्षदेवनादि अभिषेचनीयस्थाने श्रवणात् तस्यैवाङ्गं?, किंवा प्रकरणाद्राजसूयस्याङ्गमिति?। नचोभयथापि राजसूये तेषां कर्तव्यत्वाद्विचारो ऽयमनुपयुक्त इति वाच्यम्। देवनादीनामभिषेचनीयाङ्गत्वे यत्र प्रधानीभूतो ऽभिषेचनीययागः स्वतन्त्रस्तत्रापि तेषामनुष्ठानापत्तेः। अत्रोच्यते। कथं राजसूयः कर्तव्य इत्याकाङ्क्षायाः प्रवृत्तत्वात् तेषां राजसूयाङ्गत्वम्। अभिषेचनीयसन्निधिपाठस्तु तदानन्तर्यकरणार्थमात्रमिति।

स्थानसमाख्ययोर्विरोधो यथा—

बहून्मन्त्रानुक्त्वा "एतत्पौराडाशिकम्" इति पठितम्। तन्मन्त्रगणमध्ये 'शुन्धध्वं दैव्याय कर्मणे' इति पठितम्। तथा च सान्नाय्ययागे श्रूयते "सान्नाय्याय ग्रहान् गृह्णाति, शुन्धध्वं दैव्याय कर्मणे, सान्नायेन जुहोति, पुरोडाशग्रहान् गृह्णाति" इति। अत्र च मन्त्रलिङ्गाच्छुन्धध्वमिति मन्त्रः पात्रशोधने विनियुक्तः। सच सान्नाय्यसन्निधौ श्रुतः। तथा च सान्निध्यरूपस्थानबला-

त्सान्नाय्यपात्रशोधने उपयुक्तः ।

अथ पौरोडाशिकमन्त्रगणमध्यपाठाद्योगार्थबलेन पुरोडाशपात्रक्षालने विनियुक्तः । पुरोडाशस्येदं पौरोडाशं पात्रम् । तत्सम्बन्धित्वान्मन्त्रः पौरोडाशिक इति योगार्थः । अत्र सिद्धान्तः । सान्निध्यं बलवद् यदा पौरोडाशिकपदस्यान्यत्रोपस्थितस्यानुसन्धानं तदा योगार्थस्योपस्थितिस्तत्पूर्वमेव सान्निध्यात्सान्नाय्यपात्रे ऽन्वयादिति । नच पुरोडाशपात्रक्षालनमावश्यकं तत् केन मन्त्रेणेति वाच्यम् । पौरोडाशिकमन्त्रगणपठितान्यमन्त्रेण तत्कर्तव्यत्वात् । नचैवं शुन्धध्वमिति मन्त्रस्य पौरोडाशिकमन्त्रमध्यपाठो नोचित इति वाच्यम् । यागान्तरे तस्य पुरोडाशपात्रेपूपयुक्तत्वात् । सान्नाय्यं (१)हविर्विशेषः । ग्रहः पात्रं, गृह्यते ऽत्रेति व्युत्पत्त्या ।

**समाख्योदाहरणं यथा**—"हौत्रमाचरति, औद्गात्रमाचरति" अत्र होतुरिदमिति योगार्थेन हौत्रं होमः । औद्गात्रं गानम् । अत्र बाधकाभावाद्यौगिक एवार्थो ग्राह्य इति । तदुक्तं—

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानन्तु बाध्यत्वं बाधकत्वमपेक्षयेति ॥

**७८ अथ विधिनियमादिः**—

विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ १ ॥

यद्यपि कार्यत्वप्रमापकः प्रत्ययो विधिः । सच लिङादिः । कार्यादिपदवारणाय प्रत्यय इति । तथापि प्रकृतेऽज्ञातार्थप्रमापको

---

( १ ) दधिपयोरूपम् ।

वैदिकः शब्दो विधिः। अनुवादकस्य गृहीतग्राहकत्वेनाप्रमापकत्वात्। नच तस्य भ्रमजनकत्वं वाच्यम्। प्रमाभ्रमविलक्षणज्ञानजनकत्वात्। स्मृतिवत् निर्विकल्पकवच्च तन्मते तदुभयविलक्षणज्ञानमस्तीति। नियम आवश्यकत्वम्। अयोगव्यवच्छेद इति यावत्। परिसंख्या ऽन्ययोगव्यवच्छेदः। अत्यन्तमप्राप्ताविति प्राप्तिसामान्याभावार्थम्। तथा च वेदान्तराद्, अतिदेशाद्, अर्थतो, रागाच्चाप्राप्तावित्यर्थः।

आद्ये यथा—"सोष्णीषा ऋत्विजः प्रचरन्ति" इत्यनेन पूर्वमुष्णीषस्य विहितत्वात् "लोहितोष्णीषा ऋत्विज" इत्यनेनाधिकफलार्थं प्राप्ते उष्णीषे लौहित्यमात्रं विधीयते। अन्यांशोऽनुवादः।

अतिदेशाद्यथा—"एष एव विधिर्यत्र क्वचन होमे" इत्यनेन कुशकण्डिकातिदेशात्पर्युक्षणस्यापि प्राप्तौ वैश्वदेवहोमे "पर्युक्षणस्वाहाकारैर्जुहुयात्" इत्यनेन पर्युक्षणोत्तरसकलकुशकण्डिकाधर्मो निषिध्यते। "आघारमाघारयति" इत्यनेनापि कुशकण्डिकाधर्मत्वेनाऽऽघारस्य प्राप्तत्वादाज्यभागनिवृत्तिर्बोध्यते। यथा वा पार्वणधर्मातिदेशात्सपिण्डने विश्वेदेवप्राप्तौ—

सपिण्डनं तथा श्राद्धं दैवपूर्वं नियोजयेत्।

इति काण्डानुसमयो विधीयते। अनुसमयः अमिश्रणम्। देवकाण्डं समाप्य पितृकाण्डं कर्तव्यमिति।

अर्थतो यथा—एकोद्दिष्टेऽर्थैक्येन पवित्रैक्यस्यार्थतः प्राप्त्या एकं पवित्रमित्यनेन दलैक्यं विधीयते।

रागाद्यथा—ऋतौ भार्यामुपेयात् इत्यत्र नियमो विधीयते उपेयादेवेति। तथा "पञ्च (१)पञ्चनखा भक्ष्या" इत्यत्र परिसंख्या

१ "शशकः शल्यकं गोधा कूर्मो खड्गश्च पञ्चमः" इति स्मृत्युक्ता बोध्याः।

विधीयते । पञ्चनखेतरेऽभक्ष्या इति । तथा च कुत्र नियमः कुत्र परिसंख्या रागप्राप्तत्वाविशेषादत आह—नियमः पाक्षिके सतीति । अयं भावः—रागतो-यथा तस्य(१) प्राप्तिः, तथा तदभावस्यापि प्राप्तिरिति पाक्षिको ऽभावः, अयोग इति यावत् । तस्मिन्नयोगे सति अप्रशस्तिनियमः—अयोगस्य व्यवच्छेदः । अप्राशस्त्यञ्च पापजनकत्वं कर्मवैगुण्यञ्च यथासम्भवं बोध्यम् । तत्र चेति । तत्र—अप्रशस्ते । अन्यत्र—प्रशस्ते । तथा च अप्रशस्तान्यविषयकप्राप्तौ परिसंख्या ।

अन्ययोगव्यवच्छेदो यथा—पञ्चनखेतरभक्षणस्याप्रशस्तत्वात्तद्व्यवच्छेदः । तथा च नियमे ऽयोगो दोषः । अतस्तदभावो विधीयते । परिसंख्यास्थले ऽन्ययोगो दोषः । अतस्तदभावो विधीयते इति । तेन नियमे लक्षणया तदभावनिवृत्तिः । तथा च स्वार्थहानिः, परार्थकल्पनेति दूषणद्वयम् । परिसंख्यायान्तु स्वार्थहानिः, परार्थकल्पना, रागप्राप्तपञ्चनखेतरभक्षणबाधश्चेति दोषत्रयमिति ॥

मिश्रास्तु—पाक्षिकत्वं-समुच्चयाभावः । ऋतुकालतदन्यकालयोरुपगमे समुच्चयाभावात् नियमः । पञ्चनखतदन्ययोर्भक्षणे समुच्चयसम्भवात्परिसंख्या । अत एव शेषतदन्ययोर्भक्षणे समुच्चयसम्भवात् "शेषम्भुञ्जीत" इत्यत्र परिसंख्येति, वदन्ति । तच्चिन्त्यम् । "स्वदारनिरतः सदा" "शयनं मध्ययामयोः" इत्यादौ समुच्चयासम्भवेन परिसंख्या न स्यादिति ।

विधिश्चतुर्विधः—उत्पत्तिविधिरधिकारविधिरङ्गविधिः प्रयोगविधिश्चेति । तत्र प्रधानस्वरूपविधिरुत्पत्तिविधिः । यथा—

( १ ) भार्यागमनस्य ।

"अमावास्यायां पितृभ्यो दद्यात्" इति । उत्पत्तिविधेश्च विध्यन्तरापेक्षया बलवत्त्वं निरपेक्षत्वात् ।

द्वितीयो यथा—

"सपिण्डीकरणादूर्ध्वं दर्शश्राद्धादि चेष्यते" इति ।

अनेन कृतसपिण्डीकरणपितृकत्वममावास्याश्राद्धेऽधिकार इति बोध्यते ।

अङ्गविधिर्यथा–प्रधानमुक्त्वा तत्कथमित्याकाङ्क्षायां प्रवृत्तः।यथा–दर्शमुक्त्वा "इडो यजति" "समिधो यजति" "तनूनपातं यजति" "स्वाहाकारं यजति" "बर्हिर्यजति" "हविर्यजति" इति प्रयाजाद्यङ्गषट्कविधिः ।

प्रयोगविधिस्तु कल्प्यः । यथा—अयमधिकारी एभिरङ्गैः कुर्यादिति विशिष्टविधिः । तथा उत्पत्तिविधिरपि द्विविधः–श्रूयमाणः, कल्प्यश्च । आद्यः प्रसिद्ध एव । कल्प्यो यथा–रात्रिसत्रेऽर्थवादाद्विधिकल्पनम्–"प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इत्यनेन प्रतिष्ठाकामो रात्रिसत्रं कुर्यादिति कल्प्यते ।

क्वचिदनुवादाद्विधिकल्पनम्। यथा-"चरुं श्रपयति, चतुरवत्तं जुहोति"इति। अनेन चरुहोममनूद्य चरुश्रपणं चतुरवदानं च विधीयते।तेन"चरुहोमं कुर्यात्"इत्यादावेव विधिः कल्प्यते।अत्रदानं तु जुह्वादौ घृतपूर्णेन स्रुवेण घृतनिधानं, ततश्च तदुपरि चरुः स्थाप्यते, तदुपरि पुनस्तादृशघृतदानमित्युच्यते इति । एवमतिदेशोऽपि क्वचित्कल्प्यः । यथा दीक्षणीयादियागानुक्त्वा "अप्रयाजास्ता" इति श्रूयते। ता आहुतयः प्रयाजरहिताः कार्या इत्यर्थः । तथा च प्रयाजाप्राप्तौ तन्निषेधासम्भवाद्दर्शधर्मातिदेशः कल्प्यः ।

७९ अथ श्रुतशब्दात्यागः-

यथा "तद्विष्णोरिति केशवं यजते" इति श्रूयते । अत्र केशववाचकनाम्नां बहूनां सत्त्वात्केन नाम्ना उल्लेख इत्यत्र सिद्धान्तः- 'यथाश्रुतविहारेण वक्तव्यम्' इति । विहारो व्याहारः । तत्राऽव्युत्पत्तिवाक्यस्य बलवत्त्वात्केशवेत्युल्लेख्यम्, नतु मन्त्रस्थविष्णुरिति । यत्र विधौ नाम नास्ति तत्र लिङ्गस्थं ग्राह्यम् । यथा दामोदराय नमसीति । ननु—

शिवाय पद्मक्षेपेण शिवलोके महीयते ।

इत्यत्र क्षेपशब्दो लक्षणया दानपरः । तथाच तत्सङ्कल्पवाक्ये, पूर्ववत् क्षेपशब्दप्रयोगः स्यात् । मैवम् । स्वायत्ते वाक्ये लक्षणाव्याहारयोरनुचितत्वात् । अध्याहारेऽपि वाक्यभेद एव श्रुतवाक्यजन्यशाब्दबोधविषयादधिकविषयकबोधजनकत्वादिति ।

८० अथ विध्यनुवादवैषम्यम्—

एकविषये वाक्यस्य विधित्वानुवादत्वयोर्विरोध इत्यर्थः । यथा—"वासन्तसितपक्षे वन्ह्यादीन् यजेत, पौर्णमास्यां पौर्णमासेन" इति श्रूयते । तत्र च पौर्णमासेनेत्यंशेऽनुवादत्वं "दर्शपौर्णमासाभ्यां यजेत" इत्यनेन तस्य प्राप्तत्वेन तदंशे विधित्वासम्भवात् । नच तां विहायैव चतुर्दशतिथिषु विधिरस्तु । पक्षमित्यत्यन्तसंयोगे द्वितीयाश्रुतिविरोधात् । तथा चायं पौर्णमासोऽन्य एव विधेयः । पौर्णमासेनेति तद्विधिप्राप्त्यर्थं तत्संज्ञा । यथा इष्टिसंज्ञा अतिदेशप्राप्तेष्टिधर्मकत्वात् पशुयागविशेषस्य । तथा चाऽऽरब्धपक्षयागेन पौर्णमास्यां पौर्णमासद्वयमेव कार्यम् । काम्ययोस्तन्त्रत्वाभावात् । अत एवापरपक्षनिमित्तकममावास्यायां श्राद्धान्तरमेव विधीयते । तत्र तु सामान्यामावास्याश्राद्ध-

तद्मात्रास्याश्राद्धयोस्तन्त्रेणैव निर्वाहो निसत्वात् ।

## ८१ अथ नित्यानित्यवैषम्यम्—

यस्य कर्मणो नित्यविधिविषयत्वं तस्य काम्यविधिविषयत्वं नास्ति । एतच्च गुरुमते बोध्यम् । नित्यापूर्वकाम्यापूर्वयोरेकविधिबोध्यत्वासम्भवात् । यथा—

'यस्तु पूजयते नित्यं लिङ्गं त्रैभुवनेश्वरम् ।
स स्वर्गवासमोक्षाणां क्षिप्रं भवति भाजनम्' ॥

इति नित्यशिवपूजनस्य स्तुतिमात्रम् ।

यद्वा विधिकल्पनद्वारा कर्मान्तरमेवानेनार्थवादेन बोध्यते । तथा च काम्येन नित्यस्यापि प्रसङ्गेन सिद्धिर्न तु कर्मैक्यमिति ।

## ८२ अथ सापेक्षत्वनिरपेक्षत्ववैषम्यम्—

"आदित्यपरिवेशे आदित्याय यजेत" इति श्रूयते । तत्र न पूर्वाण्हनियमः आदित्यपरिवेशसमयकर्तव्यत्वादित्यत्र सिद्धान्तः—"बाधसापेक्षत्वापत्तेः" इति । तथा हि—सामान्यप्राप्तपूर्वाण्हबाधं कृत्वा ऽस्य मध्याह्नादौ प्रवृत्तिः । पूर्वाण्हसमये परिवेशे तु बाधनिरपेक्षेति एकविधेरुभयविधत्वं न सम्भवति । तेनास्य यागस्य पूर्वाण्हमात्रपरिवेशे कर्तव्यत्वम् न तु मध्याह्नादौ, निरपेक्षप्रवृत्तेः । यस्य बाधसापेक्षा प्रवृत्तिः । स विधिः कदाचिदपि न निरपेक्ष इति । न चोपरागस्यापराण्हबाधकत्वात्तत्राप्येतादृशं स्यादिति वाच्यम् । सूर्योपरागस्यापराण्हविषयकत्वसम्भवेऽपि चन्द्रोपरागस्य निरवकाशत्वापत्त्या अपराण्हविधेरेवोपरागातिरिक्तविषयत्वं कल्प्यत इति । वस्तुतो 'निशि काम्यव्रतेषु च' इतिवचने (१)पदाहवनीयवद्विरोधापत्त्या

(१) एतद्ग्रन्थस्थ(२३)त्रयोविंशाधिकरणवदित्यर्थः ।

निश्यपीसर्थः । तथा दिवा भागान्तरे मध्याह्नादौ (१)दण्डापूपवत्सिद्धिरिति ॥

८३ अथ द्वयोः प्रणयन्तीत्यधिकरणम्-

यथा धातुयागे "तपस्तपस्यौ शैशिरेण, मधुमाधवौ वासन्तेन, शुक्रशुची ग्रैष्मेण, नभोनभस्यौ वार्षिकेण, इषोर्जौ शारदेन, सहःसहस्यौ हैमन्तेन यजते" । "चतुर्षु पर्वसु वेदिं कुर्वन्ति" । "शारदे तु द्वयोः प्रणयन्ति, उपात्र वपन्ति" । "न वैश्वदेवे उत्तरवेदिमुपकिरन्ति, न शुनासीर्ये" इति शतपथश्रुतिः(२)। अस्यार्थः-तपस्तपस्यौ माघफाल्गुनौ व्याप्य शैशिरनाम्ना यागेन यजते । एवमुत्तरत्रापि व्याख्येयम् । धातौ च पौर्णमासीद्वयममावास्याद्वयं च वर्तते । तदेव पर्वचतुष्टयम् । तेषु द्रव्यासादनाय वेदिं कुर्वन्ति । तेन नैतेषु पर्वसु दर्भे द्रव्यासादनम् । शारदधातुयागे तु द्वयोः पर्वणोरेव वेदिं प्रणयन्ति-कुर्वन्ति । पर्वनामान्याह- कर्कभाष्ये ।

आग्नेयं प्रथमं प्रोक्तं वैश्वदेवं द्वितीयकम् ।
बार्हस्पत्यं तृतीयन्तु शुनासीर्यं तुरीयकम् ॥ १ ॥
आद्ययोः पूर्ववेदिः स्यादुत्तरावेदिरन्त्ययोः ।
यागोपयुक्तवस्तूनि स्थापयेत्तत्र याज्ञिक इति ॥ २ ॥

प्रथमं पर्व पौर्णमासी । द्वितीयममावास्या । तृतीयञ्च पौर्णमासी । चतुर्थममावास्येति । शुनासीर इन्द्रस्तत्सम्बन्धि शुनासीर्यम् । आद्यपर्वद्वये वेदिः पूर्ववेदिसंज्ञिका । अन्त्ययोरुत्तरवेद्या-

---

( १ ) अत्रत्य(४२)द्विचत्वारिंशाधिकरणन्यायेनेति भावः ।
( २ ) उक्तानुपूर्वीका श्रुतिः शतपथब्राह्मणे नोपलभ्यते । संहितायां तु 'तपश्च तपस्यश्च शैशिरावृतू' इत्याद्यानुपूर्वीका दृश्यते इति बोध्यम् ।

रुया । वेदिषु किं करणीयं तत्राऽऽह—उपात्र वपन्तीति । अत्र—आसु वेदिषु उपवपन्ति—उपरि द्रव्याणि स्थापयन्ति । शारदे द्वयोरित्युक्तं तत्कयोर्द्वयोरित्याह—न वैश्वदेवे उत्तरवेदिमुपकिरन्ति—कुर्वन्ति । एवं शुनासीर्येऽपीति । तेन शारदे पूर्ववेदिद्वयकरणमेव उत्तरवेद्योर्निषिद्धत्वात् । अत्र च शारदेऽपि वेदिचतुष्टयस्य प्राप्योत्तरवेदिनिषेधः सङ्गच्छते । तथा चोत्तरवेद्यंशे प्रापकस्य विधेर्बाधं विना न निषेधविधिर्भवतीति, सर्वदैव बाधसापेक्षोऽयं निषेधविधिर्न कदाऽपि बाधनिरपेक्षः । यस्तु निरपेक्षः स कदाऽपि न तत्सापेक्ष इति ।

श्राद्धविवेके तु पर्युदासविधिरयमुक्तः । वैश्वदेवशुनासीर्यभिन्नपर्वणि वेदिं कुर्वन्तीत्यर्थः । तथा 'वेदाविदं पिनष्टि' इति परिभाषया सोमाङ्गकयागमात्रे सोमपेषणार्थं वेदिर्विहिता । सोमाङ्गकयागविधिश्च द्विविधः—इष्टिः, पशुश्च । चर्वङ्गको याग इष्टिः । तेन दीक्षणीयादिविधिः सोमाङ्गकस्तत्र सोमविधेः । तथा च सर्वासामिष्टीनां दर्शपौर्णमासौ प्रकृतिः । 'प्रकृतिवच्च विकृतिः' इति न्यायेन दर्शधर्मा दीणक्षीयादिष्वतिदिष्टाः । वेदिरपि दर्शधर्मः । यागोपयुक्तं कर्म वेद्यां क करणीयमिति दर्शे ऽश्रवणाद्वेदिरप्यतिदेशाद्दर्शे प्राप्ता । एवं सोमाङ्गकत्वेन परिभाषयाऽपि वेद्यन्तरं प्राप्तम् । तथा च वेदिद्वयस्य वैयर्थ्येन शास्त्रार्थत्वाभावादातिदिष्टवेदिं बाधित्वा दीक्षणीयादिषु परिभाषाबोधितवेदिप्रवृत्तिः । परिभाषातो ऽतिदेशस्य दुर्बलत्वात् । सोमयागादौ त्विष्टित्वाभावेन दर्शधर्मानतिदेशाद्बाधनिरपेक्ष एव पारिभाषिकवेदिविधिरिति वैषम्यम् । तथा च वैषम्यपरिहाराय दीक्षणीयादिषु वेद्यतिरिक्तधर्मातिदेश एव । पारिभाषिकवेदिविधिस्तु तत्र निरपेक्ष एव भवतीति स्पष्टं दायभागसंस्टष्टिवचन-

द्रव्यप्रकरणे । एवं—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ॥
अयातयामान्येतानि नियोज्यानि पुनः पुनः ।

इतिवचने दर्भपदं केचित् श्रावणामावास्याऽऽहृतदर्भपरं वदन्ति।

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ॥
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ।

इत्यनेनैकवाक्यत्वादिति, तन्न । वैषम्यात् । दर्भा इत्यस्यैकवाक्यत्वाय वचनान्तरसापेक्षत्वात्, कृष्णाजिनादौ तु निरपेक्षत्वाद्वाक्यभेदः स्यात् । न तु समूहालम्बनरूपैकान्वयबोधः स्यात् । सापेक्षस्य विलम्बेनान्वयबोधजनकत्वादिति—दर्भा इति पदं दर्भसामान्यपरमेव । मासे नभस्यमावास्येति वचनं प्रतिप्रसवरूपम् । यथा—

वार्षिकांश्चतुरो मासान् नाऽऽहरेत् मृत्तिकाः, कुशान् ।
असम्भवे त्वाददीत सद्यो यस्य प्रयोजनम् ।

इत्यनेन कुशाहरणनिषेधे तस्य प्रतिप्रसवरूपत्वादिति ॥

८४ अथ परिभाषाऽधिकरणम्—

'कर्मण्यङ्गवैगुण्ये जुहोति' इति श्रूयते । तत्र द्रव्यमन्त्राकाङ्क्षायां परिभाषा ग्राह्या । यथा ।

'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः' ॥

मन्त्रस्यानादेशे प्रजापतिर्व्याहृतिमन्त्र इत्यर्थः । यथाऽऽह परिशिष्टे—

प्रजानां पतये त्वेता महाव्याहृतयो ऽव्यया इति ।

एवं देवतायाश्चानादेशे व्याहृतिरेव प्रजापतित्वेन पूज्ये-

त्यर्थः । एवञ्च यत्र विशेषपरिभाषा नास्ति तत्रोक्ता सामान्यपरिभाषा ग्राह्या । तथाहि "चतुर्होत्रां पौर्णमासीम्" इति, "पञ्चहोत्राममावास्याम्" इति च श्रूयते । चत्वारो होत्रा होतारो ऽस्यामित्यनेनोपांशुसंज्ञको याग उक्तः । पञ्चहोत्रामित्यनेनाग्नीषोमसंज्ञको याग उक्तः । अनयोर्द्रव्यदेवतामाकाङ्क्षत्वाद्विशेषपरिभाषा ग्राह्या । यथा—

ऐन्द्रं दध्यमावास्यापौर्णमास्योः पयस्तथा ।

तथा ऐन्द्रमित्यर्थः । एवम् "आग्नेयेन पक्षान्ते यजेत" इति श्रूयते । आग्नेयेन—आग्नेयाख्ययागेन । पक्षान्ते—तत्तिथिद्वये । तेन पौर्णमास्यामारम्भः, समाप्तिस्त्वमावास्यायामिति । मध्यस्थप्रतिपदादिचतुर्दश्यन्ततिथिव्यवधानं न दोषाय वचनबलात् । एवञ्चाग्नेयेऽपि द्रव्यदेवताकाङ्क्षायां तयैव परिभाषया तिथिद्वये ऐन्द्रदध्यैन्द्रपयसोरेव ग्रहणमिति ॥

## ८९ अथ सर्वनामाधिकरणम्—

बहुष्वपि प्रक्रान्तेषु सर्वनामपदेन शीघ्रोपस्थितिकं ग्राह्यम् । यथा श्रुतिः—'इष्टिपूर्वकमेवादः पौर्णमासं हविः' इति । प्रयाजाद्याहुतित्रयमदः पौर्णमासं हविरिष्टिपूर्वकं कुर्यादित्यर्थः । पौर्णमासयागो द्विविधः—एकोऽग्नीषोमीयपुरोडाशद्रव्यकः, अपर उपांशुयागाख्यो ऽग्नीषोमबृहस्पतीन्द्रादिदेवताऽऽज्यद्रव्यकः । यथा 'अग्नीषोमाभ्यां पुरोडाशेन, उपांशुयाजी त्वग्नीषोमबृहस्पतीन्द्रादिभ्य आज्येन जुहोति' इति । अत्र चादःपदस्य सर्वनामत्वादुभयमेवोपस्थितं हविः—पुरोडाशः, आज्यञ्च वाच्यम् । तथा च पौर्णमासयोर्द्वयोरेवेष्टिपूर्वकता प्राप्तेत्यत्र सिद्धान्तसूत्रम्—"शीघ्रोपस्थितिकेनानुभयम्" इति । उभयत्र नेष्टि-

पूर्वकता प्राप्यते, अग्नीषोमीयपुरोडाशस्याल्पदेवताघटितत्वेन शीघ्रोपस्थितित्वाददःपदेन तदेवोपस्थाप्यते । अतस्तेनैवान्वय इति दायभागे उक्तम् ।

८६ अथ निषेधपर्युदासौ—

तत्रातिदेशाद्रागादर्थतश्च यत्र प्राप्तिस्तत्र न पर्युदासः। किन्तु निषेध एव, श्रूयमाणस्य प्रापकविधेरभावात्। तादृशविध्यभावे च पर्युदासनञा केन सहैकवाक्यत्वं कर्तव्यमिति ।

अतिदेशाद्यथा-"न तौ पशौ करोति" इत्यनेन पशुयागे प्रयाजानुयाजौ निषिध्येते । न च निषेधः प्राप्तिमन्तरेण सम्भवति, इति दर्शधर्मातिदेशः कल्प्यते ।

रागाद्यथा-'पर्वणि मांसं नाश्नीयात्' इत्यादौ ।

अर्थतो यथा—शरद्वसन्तयोर्नवश्राद्धं विहितम् । तत्र शरत्पदेन शरदादिषण्मासा एव गौणमुख्यभावेन विहिताः। तथा च शरदादिषण्मासेषु नवश्राद्धं कर्तव्यमित्यर्थतो विधिः कल्प्यते । तत्र च 'नन्दायां भार्गवदिने' इत्यादिनिषेधः ।

यत्र तु सामान्यरूपेण शास्त्रतः प्राप्तस्य विशेषरूपेण निषेधस्तत्र पर्युदासः—यथा-"यजतिषु ये यजामहं करोति, नानुयाजेषु" इति श्रुतिः । अत्र च नानुयाजेषु यजतिष्वित्यन्वयः। एकवाक्यत्वानुरोधात् । निषेधे वाक्यभेदापत्तिः। न चेष्टापत्तिः।

"सम्भवत्येकवाक्यत्वे वाक्यभेदो न युज्यते"

इति वचनात् । तथा चानुयोगिप्रतियोगिनोः समानविभक्तिकत्वेन यो नञा ऽन्योन्याभावो बोध्यते स एव पर्युदासः । तेनानुयाजभिन्नेषु यजतिष्वित्यर्थः । अत्र यजतिरनुयोगी, अनुयाजः प्रतियोगीति ।

तथा—"अहरहर्ददाति" "दीक्षितो न ददाति" इत्यत्र

पर्युदासेन दीक्षितेतर इत्यर्थः । दीक्षितः कृतयज्ञारम्भः । एक-कर्ममध्ये ऽन्यकर्मनिषेधाद्दानानिषेधः । ननु पर्युदासनञा दीक्षितेतरोऽहरहर्ददातीति सिद्धम् । तथाचैकस्य ददातिपदस्य वैयर्थ्यम्(१) । मैवम् । निषेधपक्षे वाक्यभेदान्मूलभूतश्रुतेरपि वाक्यभेदापत्तेः । तथा चास्मन्मते सम्भेदे नान्यतरवैयर्थ्यमिति न्यायादरः । सम्भेदे एकपदार्थोपस्थापकबहुपदोपस्थितावित्यर्थः । अयम्भावः—यदि पदोपस्थाप्यपदार्थो नान्वयबोधे निविशते, तदा वैयर्थ्यम् । अत्र तु तन्नास्ति 'बहवो विप्राः सन्ति' इत्यत्र बहव इतिपदवत् । अत एव तत्तत्स्थले एकवाक्यत्वाय दोषद्वयग्रस्ता लक्षणाऽपि समाश्रीयते इति । नचाधिकस्य ददातिपदस्याऽऽकाङ्क्षा नास्ति तत्पदं विनाऽपि तदर्थान्वयबोधादिति वाच्यम् । यत्पदोपस्थाप्यस्यार्थस्य यत्पदोपस्थितिजन्यार्थोपस्थितिं विना अन्वयानुभवविषयत्वाभावस्तत्पदस्य तत्पदे आकांक्षेत्युक्तत्वात् । घटं कलशमानयेत्यादावप्यन्वयबोधो भवत्येव किन्त्वधिककलशपदप्रयोक्तुर्निग्रहमात्रमिति ।

यच्चोक्तं—विप्रेभ्यो दधि दातव्यं, कौण्डिन्याय न दातव्यमित्यादौ दातव्यपदस्याऽऽधिक्यापत्त्या निषेध एव न तु पर्युदास इति । तदपि लौकिकवाक्ये । तत्रैकवाक्यताविरहे क्षत्यभावात् । नहि तद्दृष्टान्तेन वेदेऽपि वाक्यभेद आदरणीय इति युक्तमिति । एवं 'रात्रौ श्राद्धं न कुर्वीत' इत्यत्रैकवाक्यत्वानुरोधात्पर्युदासेन रात्रीतरामावास्यायामित्यन्वयः । अमावास्यावचनस्य सावकाशत्वेन पर्युदस्तेतरकर्मसम्भवात् । न चैकवाक्यतायां कुर्वीतेति व्यर्थमुक्तोत्तरत्वात् ।

वस्तुतस्तु श्राद्धं कुर्वीतेत्यनेन प्राप्तश्राद्धकरणमुद्दिश्य तत्र

(१) एवञ्च निषेध एवोचित इति ।

न सम्भवति उपजीव्यबाधापत्तेः । तथा च बाधवारणायोभयविधिसार्थक्याय च विकल्पो वाच्यः । राज्यमावास्याऽवच्छेदेन निषेधेन बाधाद्विकल्पे च तदभावात् । तथा चामावास्याविधेर्दिवांशश्राद्धविधौ निरपेक्षत्वाद् राज्यंशे विधौ विकल्पकल्पनासापेक्षत्वाद्विधेः सापेक्षत्वानिरपेक्षत्वलक्षणं वैषम्यं स्यादिति विधित्वानुपपत्त्या लक्षणेति—

अत्र वदन्ति—नहि सावकाशनिरवकाशविध्योर्विकल्पस्तुल्यबलवत्त्वाभावात् । निरवकाशत्वेन निषेधस्य बलवत्त्वात् । (१)पदाहवनीयस्थले निरवकाशस्य बलवत्त्वेन क्लृप्तत्वात् ।

इतरे तु प्राप्तेनेष्टसाधनत्वबोधः । तथा चामावास्यापदस्य दिवारात्रिसामान्यपरत्वे राज्यंशे इष्टसाधनत्वबोधे तज्ज्ञानस्य राज्यंशे भ्रमत्वमापद्येत । तत्र च वेदस्य भ्रमत्वे ऽश्वमेधादिबोधकवेदे ऽनाश्वासापत्त्या ऽननुष्ठापकत्वलक्षणाप्रामाण्यं स्यात् । अतः प्राप्त्यभावार्थं पर्युदासलक्षणेति वदन्ति । तन्न । तात्पर्यभ्रमे वेदस्यापि भ्रमजनकत्वादव्यवस्थादर्शनात् । तथा चाज्ञाततात्पर्यकत्वेन भ्रमजनकत्वं, न वेदत्वेन । अतो वेदत्वेनाऽऽश्वास एव ।

अन्येतु अमावास्याविधेर्दिवापरत्वमेवास्तु, किं पर्युदासनिषेधाभ्याम् । तदपि न । दिवापरत्वे तात्पर्यग्राहकप्रकरणाद्यभावात्तात्पर्यग्रहार्थमेव निषेधवचनस्य सार्थक्यात् । दृष्टञ्च तात्पर्यग्रहार्थं विशेषवचनम् । यथा—'पायसेन श्रियै जुहोति' इति । श्रीहोमे पायसशब्दस्य श्रीवासाख्यगन्धद्रव्यस्यापि वाचकत्वात्तात्पर्यग्रहाय वाक्यशेष उक्तः—'क्षीरशृतस्तण्डुलः पायसो भवति' इति । यथा वा 'यवमयश्चरुर्भवति' इति । अत्र यवशब्दस्य—

(१) अत्रत्य(२३)त्रयोविंशाधिकरणे ।

यवेभ्यः स्वाहेति धान्ये निरूढलक्षणया धान्येऽपि यवपदप्रयोगदर्शनात्तात्पर्यग्रहाय वाक्यशेषः—

"वसन्ते सर्वसस्यानां जायते यत्र शातनम् ।
मोदमानाश्च दृश्यन्ते यवाः कणिशशालिनः" इति ॥

ननु पर्युदासपक्षेऽपि कथं लक्षणा ?, अत्यन्ताभाव इव भेदेऽपि नञः शक्तेः । मैवम् । 'अन्यायश्चानेकार्थं' इति न्यायेन नानार्थत्वायोगात् । तथात्वे च अन्योन्याभावे लक्षणैव तस्यैवाभेदान्वयात् । तथा चैकवाक्यार्थ एव पर्युदास इति ।

परे तु पर्युदासपक्षे अमावास्यायामित्यत्र यथा रात्रीतरान्वयस्तथा ऽष्टकादावपीति रात्रिश्राद्धनिषेधवचनस्याऽऽवृत्त्यापत्तिरिति, सत्यम् । सति तात्पर्ये आवृत्त्यकल्पना विशेषवचनाविषयसर्वश्राद्धतिथीनामेव दिवापरत्वग्रहस्याऽऽकाङ्क्षितत्वादावृत्तिं विनैव सर्वत्रान्वय इति सर्वत्रान्वये एकवाक्यस्यैव तात्पर्यमिति ।

तुल्यबलवत्त्वे विकल्पो यथा—'अतिरात्रे षोडशिनं गृह्णाति' 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र उभयोरेव निरवकाशत्वात्तुल्यत्वम् । षोडशकला अस्य सन्तीति षोडशी सोमः । प्रकृते स वृक्षविशेषः । तथा च प्रकृतियागे सोमग्रहणस्य विहितत्वाद्विकृतियागे ऽतिरात्रे ऽतिदेशेन सर्वदा प्राप्तत्वात्तद्विकल्पार्थं वचनम् । नच यदि षोडशिग्रहणं विना यागसिद्धिस्तदा तद्ग्रहणोपदेशो व्यर्थः । फलभूमार्थं ग्रहणोपदेशात् ।

८७ अथ यद्भक्तन्यायः—

ननु तत्तद्देवपूजायामावरणपूजा क्रियते तत्कथम्? । न तत्प्रधानस्वरूपनिर्वाहकं प्रधानस्वरूपस्य गन्धाद्युपचारैरेव सिद्धेः । नाप्यदृष्टद्वारा, मानाभावात् । कदा वा तत्कार्यमत्र सिद्धान्तः— "यो यद्भक्तः स तद्बलात्" इति । तद्बलात्प्रधानपूजनात्प्र-

कबलात्। तथा च प्रधानपूजा तेषां प्रयोजिका। अतः प्रधानपूजानन्तरं तत्कार्यम्। अत एव प्रयोजकत्वात्तदुत्तराङ्गमिति। तेन प्राचीनाङ्गापूर्वसहितं प्रधानं प्रधानापूर्वं (परमापूर्वं) जनयति। चरमाङ्गापूर्वसहितं प्रधानापूर्वं चरमाङ्गापूर्वं जनयति इति। तथा च ग्रहयागे ऽधिदैवतप्रत्यधिदैवते ग्रहपूजानन्तरं पूज्ये। एवं दुर्गापूजायां पश्चादेव योगिन्याद्याः पूज्याः। एवमिष्टदेवतापूजनेऽपि। नच तत्तत्क्रमविधित एव तत्तत्पूजा प्राप्नोति न्यायोऽयं व्यर्थः। एतन्न्यायमूलत्वात्तत्क्रमविधेः। आवरणदेवताज्ञानार्थमेव तद्विधेः। पश्चात्कर्तव्यत्वञ्च न्यायबलादिति।

## ८८ अथानुयाजाधिकरणम्—

तत्र परिभाषाश्रुतिः श्रूयते "सूक्तवाकेन्द्रस्तुतिप्राजापत्यसूक्तानि प्रजप्यानुयाजान् करोति, ततः प्रकृतमनुतिष्ठति" इति। तथा चानुयाजाङ्गकयागे सूक्तवाकादीन् प्रजप्यानुयाजान् कृत्वैव प्रकृतं कुर्यात्। अयश्चानुयाजः प्रयाजानुयाजभिन्नः। एवं बहुसुवर्णके श्रूयते "आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति" इति। आग्निमारुतयागो बहुसुवर्णयागैकदेशः प्रधानीभूतः। तदुत्तरमनुयाजानां विधानादनुयाजानामुत्कर्षो नतु सूक्तवाकादीनां तथाश्रुतेरिति पूर्वपक्षे जैमिनिसूत्रम्—"तदन्तत्वादनुयाजानाम्" इति। अयमर्थः—अनुयाजानां सूक्तवाकोत्तरं कर्तव्यत्वादनुयाजोत्कर्षे सूक्तवाकादीनामप्युत्कर्ष इत्येतदधिकरणं तदाद्युत्कर्षन्यायमूलमिति। एवं सपिण्डनापकर्षे मासिकानामप्यपकर्ष इति श्राद्धचिन्तामणिः॥

## ८९ अथ सक्त्वधिकरणम्—

पूषयागे "सक्तुना यजेत" इति श्रूयते। सक्तोस्तु प्रोक्षणं न श्रूयते। अतः सक्तोरप्रोक्षितस्यैव होम इत्यत्र सिद्धान्तसू-

त्रम्— "नियोगसाधनलक्षणया सिद्धेः" इति । अस्यार्थः—व्रीहीन् प्रोक्षतीत्यत्र द्वितीयाबोधितक्रियाजन्यफलाश्रयस्वरूपकर्मत्वानुपपत्त्या व्रीहिनिष्ठः संस्कारः कल्प्यते । अन्यथा प्रोक्षणस्याऽऽशुविनाशितया प्रोक्षिततुल्यतया प्रोक्षितवदप्रोक्षितस्याप्यवघातान्वयापत्तेः । एवं यवे प्रोक्षणं कथम् ? इत्थम् । व्रीहिशब्दस्य नियोगसाधनद्रव्यपरतया यवेऽपि तत्सिद्धेः । अन्यथाऽवघातस्यापि यवे बाधः स्यात् । व्रीहिष्वेव तदुपदेशात् । नच व्रीहीनवहन्तीत्यत्र लक्षणाऽस्तु । अन्यथा यवाऽनवघाते सतुषयवेन पुरोडाशानिष्पत्तिरिति वाच्यम् । व्रीहीन् प्रोक्षति व्रीहीनवहन्तीत्यादौ समानप्रकारतानिर्वाहार्थं सर्वत्रैव लक्षणा । एवं सक्तोरपि नियोगसाधनत्वात् प्रोक्षणान्वयः ।

अन्ये तु अवघातप्रकरणीयत्वाद् व्रीहिपदस्य सक्तौ न प्रोक्षणम् । अत एवाऽऽज्यस्य प्रोक्षणं विनैव होम इति वदन्ति—

तत्र परे वदन्ति । संस्कृतद्रव्यस्य वैदिककर्मणि नियोगादाज्यस्यापि पवित्रोत्पवनेन संस्कृतत्वात् न तत्र प्रोक्षणापेक्षा । सक्तोस्तु प्रोक्षणं विना संस्काराभावात्प्रोक्षणमेव । अत एव—

"नाप्रोक्षितं स्पृशेत् किञ्चिद्दैवे पित्र्ये च कर्मणि" ।

इत्यत्र नियमार्थं नञ्द्वयम् । नन्ववघातरूपः संस्कारस्तर्हि कथं न स्यादित्यत आह—व्रीहीनित्यादि । तत्र विधेरसम्भवान्नासौ संस्कारः । प्रोक्षणे तु नाप्रोक्षितमित्यादिविधिरस्त्येवेति । व्रीहीनवहन्तीति लक्षणया सर्वत्र प्रोक्षणप्राप्तत्वाद्विधेरसम्भवात् ।

परे तु व्रीहाविवत्रासमानप्रकारकबोधं कल्पयित्वा यवे प्रोक्षणाभाव एव कल्प्यताम् । कल्पनातो जघन्या लक्षणेति न्यायात् । यथा विष्णुधर्मोत्तरे—

ज्येष्ठे मासि सिताष्टम्यां यः पूजयति केशवम् ।
न दुर्गतिमवाप्नोति वाजपेयञ्च विन्दति ॥

शिवरहस्ये—

शुक्लाष्टम्यां शुक्रमासे यः पूजयति शङ्करम् ।
दुर्गतिं न लभेच्चैव वाजपेयफलं लभेत् ॥

अत्र मूलभूतश्रुतिद्वयकल्पनाभिया केशवपदस्य लक्षणया शङ्करपरत्वमेवास्तु । नच विनिगमनाविरहः अष्टमीतिथेः शैवत्वेनोक्तत्वात् । यथा— 'हरस्य तिथिरष्टमी' इति । तथा चात्र लक्षणा न क्रियते, किन्तु मूलश्रुतिद्वयकल्पनैवेति वदन्ति । **एवं ते वक्तव्याः**—धान्यमसिमन्त्रे धान्यपदेन तण्डुललक्षणा कर्तव्या मन्त्रपाठस्यादृष्टार्थकत्वकल्पनयैवोपपत्तेः । केशवपदे च न लक्षणा लक्षणाबीजस्य मुख्यार्थानुपपत्तेरभावादिति ।

**९० अथ गिरगिराऽधिकरणम्—**

अग्निष्टोमे "ऋत्विजो देवानामन्त्रयन्ति, यज्ञायज्ञा वो ऽग्नये गिरागिरा च दक्षसे" इति श्रुतिः । अस्यार्थः—वो युष्मभ्यमिन्द्रादिभ्यः अग्नये च यज्ञा यज्ञा यज्ञे यज्ञे गिरा गिरा तत्तन्मन्त्रेण दक्षसे ऽहं यजे। 'दक्ष दाने' इतिधातोर्लेट उत्तमपुरुषैकवचनमिट्, तस्यैत्वं "सिब्बहुलं लेटि"इति सिपि दक्षसे इति । यज्ञायज्ञा इति "सुपां सुलुग्" इति सप्तमीस्थाने आजादेशः । उक्तश्रुत्यनन्तरं "न गिरागिरेति ब्रूयात् । यद्गिरागिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेत् । तस्मादैरं कृत्वोद्गेयम्"इति । अस्यार्थः—ऋत्विजो देवानिति यदुक्तं तत्रोद्गातृव्यतिरिक्ता ऋत्विज इति बोध्यम् । तत्र हेतुमाह—उद्गाता न गिरागिरेति ब्रूयात् यदि वदेत् तदाऽऽत्मानमेव गिरेन्नाशयेत् । तर्हि किं वाच्यम् । तत्राऽऽह— तस्मादिति । ऐरं गिरागिरेतिपदस्थाने इरापदयुक्तं मन्त्रं कृत्वोद्गात्रोद्गेय-

मित्यर्थः । तथा चोद्गात्रैवं पाठ्यम्—"यज्ञायज्ञा वो अग्नये इरा इरा च दक्षसे" इति(१)। इराइरेति—"सुपां सुलुग्" इति तृतीयाया आजादेशः। तेन इरया मन्त्रवाण्या दक्षसे इत्यर्थः। इराशब्देन वाण्युच्यते इति ॥

९१ अथ कलञ्जाधिकरणम्—

'न कलञ्जं(२) भक्षयेत्' इत्यत्र लिङा बोधितकार्यत्वमभावेऽन्वेति। तेन कलञ्जभक्षणाभावविषयकं कार्यमित्यन्वयबोधः। तथा च निषेधापूर्वस्य विहितादृष्टत्वेन संस्कारसापेक्षोत्पत्तिकत्वादनुपनीतानामपरिणीतानां कन्यानाञ्च नैतद्विधिविषयत्वम्। न चाष्टकादिश्राद्धाधिकारोऽनुपनीतानामपि दृश्यते इति नादृष्टे संस्कारापेक्षेति वाच्यम्। बाधकाभावे सतीति विशेषणात्। तत्र च—

'एतच्चानुपनीतोऽपि कुर्यात् सर्वेषु पर्वसु'

इत्येव वचनं बाधकम्। अन्यथाऽनुपनीतानां दर्शादियागाधिकारोऽपि स्यात्। इत्यत्र सिद्धान्तसूत्रम्- "नैतदन्यनिषिद्धत्वात्" इति। अस्यार्थः—एतद्भवदुक्तं न। कुतः ?, अस्य कलञ्जभक्षणस्य निषिद्धत्वात्। अयम्भावः—कलञ्जभक्षणस्य रागप्राप्तविषयकनिषिद्धत्वेन पापजनकत्वव्याप्तत्वात्। न च पापोत्पत्तौ संस्कारः सहकारी। तथा च असंस्कृतैरपि कलञ्जभक्षणादितो निवर्तितव्यम्। अष्टकादिश्राद्धवदेतदृष्टेऽपि न संस्कारः सहकारी। तत्र वचनवदत्र (कलञ्जभक्षणे) न्यायस्य सत्त्वादिति।

(१) सामगा इरापदगानार्थं गानशास्त्रपरिभाषयेकारस्य स्थाने आकारो यकार ईकारश्चेति त्रीन्वर्णान् प्रयुञ्जते। तत आयीरा इत्येव गातव्यम्।

(२) विषाक्तशरविद्धपशुमांसं कलञ्जम्।

### ९२ अथ लिङ्गसमवायन्यायः—

इष्टकाचयनयागे 'प्राणभृता इष्टकां संस्करोति' इति श्रूयते। प्राणभृता—प्राणभृन्मन्त्रेण। अत्र च दशानामिष्टकानां यागे उपयोगः। तथा श्रुत्यन्तरं "प्राणभृत उपदधाति" इति। अस्यार्थः—प्राणभृन्मन्त्रेण संस्कृता इष्टका अग्निसमीपे दशदिक्षु स्थापयतीति। तथा च सर्वेष्टकानामेव संस्कारः, पूर्वश्रुतौ इष्टकामित्येकवचनस्याविवक्षितत्वात्। अत्र सिद्धान्तसूत्रम्—"लिङ्गसमवायात्" (अ०१पा०४अधि०१८सू०२८) इति। लिङ्ग्यते ज्ञाप्यते ऽनेनेति लिङ्गं, प्राणभृत्पदवाच्याः संस्कृता इष्टकास्तत्समवायात्तत्सम्बन्धादिष्टकागणस्यैवाजहत्स्वार्थलक्षणया ऽभिधानमिति प्राणभृत इति बहुवचनस्योपपत्तेरुत्तरश्रुतेर्लक्षणयैवोपपत्तौ पूर्वश्रुतिबाधस्यान्याय्यत्वम्। तस्य निरपेक्षत्वेन बलवत्त्वात्। नचेष्टकासंस्कारे ऽनध्यवसायः पुरोडाशकपालवदुपपत्तेः।

### ९३ अथ प्रकृतिभागव्यवस्था—

"कृष्णाघ्न्याक्षीरे कृष्णलान् श्रपयेत्, विष्णुब्रह्मरुद्रेन्द्रादित्ययमेभ्यो जुहोति इदं विष्णुः, ब्रह्मादेवानां, नमः शम्भवे, त्रातावमित्रं, आकृष्णेन, असियमइति" इति श्रुतिः। कृष्णाघ्न्या—कृष्णा गौः। अत्र यमेभ्यइति बहुत्वश्रुतावपि न साहित्येन देवतात्वम् प्रत्येकम्मन्त्रोपदेशादिति। अस्य विकृतियागे श्रुतिः "तथैव नीवारान् श्रपयेत्, तथैव जुहोतीत्यायुष्कामः, द्व्यंशं विष्णवे, साम्येनान्येभ्यः" इति। चरुत्रिभागं कृत्वा एकमंशं विष्णवे ऽन्यद्व्यंशं समभागेन ब्रह्मादिभ्यो जुहुयादित्यर्थः। तथा च प्रकृतियागे कृष्णलचरोर्न द्व्यंशकरणम् विकृतावेव तदुपदेशात्। इत्यत्र सूत्रम्—"असति विरूपे पूर्वापरयोः साम्यम्" इति। विरूपे बाधके ऽसति पूर्वापरयोः प्रकृतिविकृत्योः

साम्यमेव। तेन कृष्णलचरोरपि त्र्यंशकरणमिति।

पृथिवीयागे श्रूयते—"पृथिव्यै क्षीरेण दध्ना च जुहोति, इरावतीति वायुं पिबति, क्षीरं, दधि च" इति। अस्य विकृतौ श्रुतिः "वायवे जुहोति, चतुःपलं चतुर्धा ऽश्नाति" इति। अत्र पलचतुष्कस्य चतुर्भागं कृत्वा ऽशनं विहितम्। प्रकृतिविकृत्योः साम्यकथनात्—प्रकृतावपि तथैव भागस्य वाय्वादित्रयाणां प्राप्तत्वादाह—असति विरूप इति। वायोर्गुरुत्वाभावेन पलाभावाद्भागासम्भव इति प्रकृतौ दधिपयसोरेव भागकरणं, वायोः सकृदेव पानम्। एवं विकृतियागे वायुभक्षणं नाङ्गं तस्य पलासम्भवात्। पलत्वेनैव भक्षणविधानात्। तथा च—

यो येन संपिबेद्वर्षं सोऽपि तत्समतामियात्।
पादन्यूनश्चरेत्सोऽपि तस्य तच्च व्रतं द्विज॥

इति व्यासवचनम्। यः पापी येन पापिना सम्पिबेत्संसर्गी स्यात् तस्य व्रतं पादन्यूनं स कुर्यादित्यर्थः। तेन ज्ञानपूर्वकब्राह्मणघातिनि मनुना द्वादशवार्षिकादित्रयोदशप्रायश्चित्ताभिधानात्तन्मध्ये मरणस्य विधानेऽपि न तस्यातिदेशः तत्संसर्गिणि मरणस्य पादन्यूनत्वासम्भवात् किन्तु द्वादशवार्षिकमेव पादन्यूनं प्रायश्चितमिति प्रायश्चित्तविवेकः। एवं प्रकृतिविकृत्योः साम्यकथनाद्विकृतावाभ्युदयिके 'कराग्राग्रपवित्रकान्' इति श्रुतेः पार्वणेऽपि तथैव विशेषानुपदेशादिति नवीनगौडाः।

मैथिलास्तु 'पित्र्ये द्विगुणा दर्भा दक्षिणाग्राश्च' इति परिभाषया पवित्रस्य पार्वणे ब्राह्मणकरे दक्षिणाग्रत्वमेव, तथाऽऽभ्युदयिकेऽपि तथात्वप्राप्त्या तद्बाधाय कराग्राग्रेति। अत एवाचार्याणामुत्सर्गे द्विगुणकुशाग्रदिशि नानध्यवसायः किन्तु दक्षिणाग्रा एव धार्या इति वदन्ति।

अत्र वदन्ति—पार्वणस्याभ्युदयिकप्रकृतित्वे 'प्रकृतिवद्विकृतिः' इतिन्यायेन पार्वणाङ्गसमुदायस्यैवातिदेशः। तथा चाष्टकाश्राद्धस्यापि पार्वणतया तद्धर्माणामपूपमांसशाकानामावश्यकानामङ्गानामपि प्राप्तिः स्यात्पार्वणपदवाच्यता च तस्यापि। यथा भविष्ये—

अमावास्यायां क्रियते पार्वणं समुदाहृतम्।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः।

तथा चामावास्याश्राद्धत्वं पर्वश्राद्धत्वञ्च पार्वणपदशक्यतावच्छेदकमतोऽष्टकाश्राद्धं पार्वणपदवाच्यमेवेति। अत्र नवीनाः—यद्यपि पार्वणपदस्योभयमपि शक्यं, तथापि अमावास्याश्राद्धे रूढेस्तस्य शीघ्रोपस्थितिकत्वात्पार्वणविधिना कुर्यादित्यत्रामावास्याश्राद्धमुपस्थापितम्। पर्वश्राद्धे यौगिकत्वात्तस्य चावयवार्थोपस्थित्यधीनत्वाद्विलम्बोपस्थितिः। ततः शीघ्रोपस्थितिकेनैवान्वयबोधः स्यादिति नापूपादीनामतिदेश इति बहुदिनभावनापूर्वकं समाधानमाहुः। सामान्यातिदेशे विशेषानतिदेश इति न्यायात्पार्वणविशेषाष्टकाधर्मस्याप्राप्तत्वात्। स तु न्यायो यथा—"विद्याकाम ऊर्जमारभ्य वर्षं प्रति कृष्णचतुर्दश्यां रुद्राय तिलैर्जुहोति इमारुद्रायेति, तपस्ये तु यवान् श्रपयति" इति रुद्रयागमुक्त्वा "एवं दाम्पत्यसर्वकामः प्रत्यष्टम्यम्बिकायै जुहोत्यम्बेऽम्बिकइति" इति श्रुतावुक्तम्। ऊर्ज—कार्तिकमिति। तपस्ये—फाल्गुने। अत्र च रुद्रयागः अम्बिकायागस्य प्रकृतिरेवमित्युक्तेः। तथा च रुद्रयागे फाल्गुनकर्तव्ये चरुरङ्गम्। तथा चाम्बिकायागे सर्वमासेष्वेव चरोरप्यतिदेशात्प्राप्त्या अम्बिकायागस्तिलैश्चरुणा च कार्यः।

नच तपस्ये इतिश्रुतेः कथं सर्वमासेष्विति वक्तव्यम्। त-

पस्यस्य चतुर्दशीधीशेषत्वात्तपस्ये च चतुर्दश्यामित्यन्वयात् । तथा अष्टम्यां न तपस्यान्वयो ऽन्यान्वितत्वात् । एवञ्च केवलमतिदेशेन यवस्यैवान्वयः । इत्यत्र सिद्धान्तसूत्रम्—"तुल्यप्राप्त्या नातुल्यप्राप्तिः" इति । सामान्यस्यातिदेशेन न विशेषस्यातिदेश इत्यर्थः । तेनाम्बिकाहोमे न चरुः तस्य मासविशेषणीयत्वेन विशेषत्वात् ।

एवं सांवत्सरिकैकोद्दिष्टं प्रकृतिराद्यैकोद्दिष्टे च "इह लोकं परित्यज्य" इति मन्त्रोऽङ्गम् । सांवत्सरिके एकोद्दिष्टविकृतौ तस्याङ्गत्वं स्यात्तत्राप्येष एव न्याय इति ।

यच्चोक्तं—पार्वणपदस्योभयमेव शक्यं, तदपि न । "अन्यायश्चानेकार्थत्वम्" (अधि० ४९) इति सूत्रात् । अमावास्याश्राद्धत्वमेव शक्यतावच्छेदकं, नान्यत् । तथा हि अमावास्यायामिति यद्यधिकरणसप्तमी तदा ऽमावास्याधिकरणकं भाद्राद्यैकोद्दिष्टमपि पार्वणं स्यात्, ततश्चामावास्यात्वेन यत्र निमित्तता तत्पार्वणं नत्वमावास्यानिमित्तकमात्रम् । अमावास्याया मृताहत्वे मृताहनिमित्तकस्यामावास्यानिमित्तत्वात् । एवं पर्वणीत्यत्राधिकरणसप्तमीत्वेन स एव दोषः । अतः पर्वत्वेन निमित्तता वाच्या, सा च न सम्भवति अष्टकादिश्राद्धे पर्वणीत्युल्लेखापत्तेः । निमित्ततावच्छेदकरूपेण निमित्तस्योल्लेखात् । न च निमित्तानामिति श्रवणान्निमित्तस्यैवोल्लेखो न तु तत्त्वेनेति वाच्यम् । एवमशौचान्तद्वितीयेऽह्नि इत्यादेरनुल्लेखात् । निमित्तस्य तद्दिनस्य अद्येत्यनेनैवोल्लेखात् । तथा चामावास्यात्वावच्छिन्ननिमित्तताकश्राद्धत्वं पार्वणपदशक्यतावच्छेदकम् । कथं पार्वणपदप्रयोगस्तत्राह—क्रियते इति । वा एवार्थः ।

"वा स्याद्विकल्पोपमयोरेवार्थे चावधारणे"

इति कोशात् । पर्वण्येव क्रियत इति पार्वणम् । तथा च योगस्यापि दर्शनेन पङ्कजपदवद्योगरूढिः प्रदर्शितेति ।

एवञ्चामावास्यायां पार्वणश्राद्धमित्येव प्रयोगो नतु अमावास्यानिमित्तकमिति श्राद्धविशेषणम् । पार्वणपदेनैव तदर्थोपस्थितेः । अमावास्यायामिति निमित्तसप्तमीमुक्त्वा केचिद्विशेषणं वदन्ति । तन्न । अमावास्यायास्तर्हि अधिकरणत्वेनालाभात् । नह्येका सप्तमी सकृदुच्चरिता उभयमर्थं बोधयति । ततश्चाष्टकायामपि पार्वणविधिनेति प्रयोज्यम्, न पार्वणमिति मघादिश्राद्धवदिति ।

अत एव ।

पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ।

इत्यत्र पार्वणाष्टकाश्राद्धयोर्भेदेनोपादानम् ॥

अथ कस्तावत्प्रकृतिविकृतिभावः ? ।

न तावत्कार्यकारणभावः । घटस्य कुलालविकृतित्वापत्तेः । मृद्विकारो हि घटः । नच समवायेनेति तत्र वाच्यम् । गुणस्य द्रव्यविकृतित्वापत्तेः । अथ कारणतावच्छेदकाश्रयकार्यत्वं विकृतित्वम् । तथा च सुवर्णत्वं कुण्डलकारणतावच्छेदकं तदाश्रयं कुण्डलमिति सुवर्णविकारं तदुच्यते । नचैवं कार्यस्य स्वजनकत्वापत्तिरिति वाच्यम् । स्वरूपयोग्यत्वस्येष्टत्वात् । फलोपधानस्य तु पूर्ववर्तित्वाभावादभावः, जातघटं प्रति भाविदण्डवत् । मैवम् । उक्तविकृतित्वमाभ्युदयिकादावसत्त्वेन प्रकृतानुपयोगीति ।

ननु सुवर्णादिसाधारणमिदं प्रकृतित्वं विकृतित्वञ्च नास्ति यागादेः प्रकृतित्वम्—अतिदिश्यमानाङ्गप्रतियोगित्वम् । यस्याङ्गमतिदिश्यते तत्प्रतियोगि । तादृशानुयोगित्वञ्च विकृतित्वमिति चेदेवमन्योन्याश्रयापत्तिः । प्रकृतित्वज्ञाने प्रकृति-

वद्विकृतिरित्यतिदेशः। अतिदेशघटितस्य विकृतित्वमिति। उच्यते—नात्रान्योन्याश्रयः। स हि द्विविध एव दुष्टः। उत्पत्तितो ज्ञप्तितश्चेति। नाद्यः—प्रकृतित्वस्याजन्यत्वेनाऽतिदेशानपेक्षणात्। न द्वितीयः प्रकृतित्वस्यातिदेशज्ञानं विनापि क्वचित्तद्वदिदमित्यादिवाक्यत्वात्, क्वचिन्न्यायगम्यत्वात्।

किञ्चातिदेशज्ञानं न प्रकृतित्वज्ञानाधीनं लक्षणप्रविष्टातिदेशपदादेव तदुपस्थितेः।

नन्वतिदेशात्प्राप्तिरित्यत्रानिषिद्धविषये प्राप्तिः प्रमैव वाच्या। तथा चातिदेशस्यातिरिक्तप्रमाणत्वापत्तिः। प्रत्यक्षानुमानयोरसम्भवात्, शब्दस्याभावाच्च। मैवम्। अन्यत्र श्रुतस्य प्रकृतेऽश्रुतस्य कल्पनमतिदेशः। "पारमेष्ठ्यकामो विरिञ्चये जुहोति ब्रह्मादेवानामिति, प्रोद्गातृभ्यो हुतशेषफलचमसभक्षं प्रयच्छति" इति श्रूयते। प्रोद्गातृभ्य इति बहुवचननिर्देशात्प्रोद्गात्रादिभ्य ऋत्विग्भ्य इत्यर्थः। अत्र यद्यपि होमस्य द्रव्यं नोक्तं तथाऽपि हुतशेषमिति श्रुत्या फलचमसस्य होमद्रव्यत्वं कल्प्यते नातिदेशादतोऽन्यत्रश्रुतस्येति। श्रुतस्य—प्राप्तस्य। तेनातिदिष्टातिदेशे नाव्याप्तिः। यथा पार्वणातिदेश एकोद्दिष्टे, तदतिदेशः साम्वत्सरिके इति। "चक्षुष्काम आदित्यायार्कसमिधा जुहुयात्" इति। चित्रं देवानामिति सहस्रं सौरलोककामस्तथैव तस्मै जुहोति" इत्यत्र तथैवेति श्रुत्यैव पूर्वोक्तसर्वाङ्गप्राप्तिर्नातिदेशादतोऽतिव्याप्तिवारणाय प्रकृतेऽश्रुतस्येति। वस्तुतोऽश्रुतस्येति न देयम्। तथैवेत्यनेनाप्यतिदेशदर्शनादिति। कल्पनन्त्वनुमानम्—यथाऽयं यागः प्रकृतिविकृतियावदङ्गाङ्गकः विकृतित्वात् दर्शविकृत्याष्टमिकयागवत्। नच दृष्टान्तेऽसिद्धिः पूर्वपूर्वानुमानाधीनत्वात्। यद्वा प्रकृ-

तिश्रुतानामेव वाक्यानां न्यायेन समभिव्याहारः कल्प्यते। तथाच शब्द एवातिदेशः।

नन्वतिदेशस्य शब्दत्वे ऽतिदिष्टनिषेधस्य पर्युदासत्वासम्भवः श्रुत्यभावेनैकवाक्यताया असम्भवादिति। न, तत्र पर्युदासत्वे वैयर्थ्यापत्तेः। 'एकोद्दिष्टे नावाहनम्' इत्यत्र पर्युदासत्वे आवाहनभिन्नं कुशासनादि कुर्यादित्यर्थः स्यात्तस्य चातिदेशादेव प्राप्त्या नावाहनमिति व्यर्थं स्यात्। आवाहनञ्च स्यात्तस्याप्यतिदेशात्। 'आवाहनरहितं कुर्यात्' इत्यर्थे तु निषेधे एव पर्यवसानमिति।

## ९४ अथ स्थालीपुलाकन्यायः—

"श्येनेनाभिचरन् यजेत। मेमीक्षीरेण श्येनं श्रपयति। कालान्तकयमरुद्रेभ्यो जुहोति, कालःकरालइति, कार्ष्णिरसीति, असियमइति, यातेरुद्र इति। अष्टाशासु भस्म किरति। अष्टलोहपात्रे पुलाकान् दहति स्थाल्यां वा"इति श्रूयते। कस्य भस्मेत्यतो ऽष्टेति। अष्टलोहानि यथा—

काञ्चनं रजतं ताम्रमारकूटं तथायसम्।
शीसकं रङ्गकांस्ये च लोहाष्टकमुदाहृतम् ॥ १ ॥

तथा शैवयागे "भस्मतिलकी मृत्युञ्जयाय जुहोति" "अभिचारशमनाय गोमयचूर्णानि लोहाष्टकपात्रे दहति तद्भस्म भवति" इति। एवञ्च लोहाष्टकपात्रसम्पत्त्या शिवयागसङ्कल्पे कृते तत्पात्रापचारी कथं कर्म कुर्यात्?। कर्मासम्पत्तौ च प्रत्यवायी स्यादत्र सूत्रम्–"स्थालीपुलाकवत्" इति। यथा–पुलाकदाहे लोहाष्टकापचारे स्थाली ग्राह्या, तन्न्यायादत्रापि तथा। एवं

गवामभावे दातव्यं तन्मूल्यं न तु संशयः।

इति गोवधप्रकरणोक्तमन्यत्रापि सम्बध्यते। तथा

चान्यप्रकरणोक्तमवश्यापेक्षणीयमन्यत्रापि ग्राह्यमिति । अत एव मैथिलाः—यज्ञप्रकरणोक्तं "पवित्रेस्थोवैष्णव्यौ" इति मन्त्रद्वयं श्राद्धार्थपवित्रेषु न वदन्ति, अमावास्यापेक्षणीयत्वाभावात् । अवश्यापेक्षणीयत्वे दक्षिणकरधारणार्थपवित्रेऽपि तदापत्तेः । नचैवं श्राद्धेऽसंस्कृतपवित्रान्वयप्रसङ्गः । तत्र द्रव्यान्तरवत्तूष्णीं प्रोक्षणेन संस्कारात् । वस्तुतस्तु "बर्हिषः प्रादेशमात्रे पवित्रे कुरुते, ओषधीमन्तर्धाय छिनत्ति, न नखेन, पवित्रेस्थोवैष्णव्याविति । अथैनमद्भिरनुमार्ष्टि विष्णोर्मनसा पूतेस्थ" इति गोभिलवचनं यज्ञप्रकरणपठितमपि परिभाषारूपम् । अन्यथा श्राद्धे नखेनापि छेदनं स्यात् । तर्हि श्राद्धे ओषाधिव्यवधानेन छेदनमायातमिष्टापत्तेः । ओषाधिर्यवादिः । धारणार्थपवित्रे तु ओषध्यादेरन्वयोऽस्त्येव, नतु मन्त्रान्वयः । स्नानं विना मन्त्रपाठेऽनधिकारात् । स्नानेऽपि पवित्रधारणस्याङ्गत्वात् । नचातोऽधिस्नातेन समन्त्रकपवित्रं क्रियतां, विशेषवचनाभावे अङ्गानां समानकर्तृत्वनियमात् । एवं पूर्वदिनकृतसमन्त्रकपवित्रस्य न कर्माङ्गत्वं विशेषवचनाभावे समानकालकर्तव्यत्वात् । नच स्नानातिरिक्तकर्मसु मन्त्रान्वयोऽस्तु, मन्त्रपाठेऽपि पवित्रधारणस्याङ्गत्वादनवस्थापातात् । तथा च कृष्णले ऽवघातबाधवद्धारणपवित्रे मन्त्रबाधः । नच गोभिलेन पिण्डस्थाने पवित्रेण रेखोक्ता, तत्र मन्त्रान्वयोऽस्त्विति वाच्यम् । तत्र पिञ्जल्या इति श्रवणात् । तथा च पवित्रपदेन यत्राभिधानं तत्र मन्त्रस्याङ्गता । नचैवं सर्वाङ्गपवित्रे मन्त्रान्वयः । इष्टापत्तेः । पद्धतौ तादृशलेखनन्तु आज्यसंस्कारकपवित्रमन्त्रावुपदेशात् तत्रापि तथा प्राप्त्येति ।

अत्र वदन्ति—यज्ञे 'बर्हिषः पवित्रे कुरुते' इति श्रुतेर्मध्य-

एव समन्त्रकपवित्रकरणं, श्राद्धे तु "चमसेषु पवित्रान्तर्हितेष्वपः क्षिपति शन्नोदेवीरिति" इति तदानींकरणश्रुतेः श्राद्धारम्भात् पूर्वं समन्त्रकपवित्रकरणमस्तु । यथा—

"शुचींश्च विदुषो विप्रान् सम्यग्यत्नेन भोजयेत्" ।

इत्यत्र श्राद्धभोजनसमये तेषां न शुचित्वकरणं, किन्तु श्राद्धारम्भात्पूर्वं शुचित्वविशिष्टा एव ते भोजनसमये इति । यथा वा चमसानां न तदा करणमिति । तन्न, श्राद्धात्पूर्वं पवित्रं यत्कर्तव्यं तत्र मन्त्रपाठो न । तद्विधानं द्विविधम्—काम्यं, नित्यञ्च । नाद्यं, फलाश्रुतेः । विश्वजिन्न्याये च तत्र पृथक् सङ्कल्पः स्यात् । न द्वितीयमकरणे प्रत्यवायाश्रुतेः, प्रायश्चित्तानुपदेशाच्च । किन्तु पवित्रविशेषणत्वेनाङ्गत्वम् । पवित्रमप्यस्य विशेषणत्वेनाङ्गमतो मन्त्रविशिष्टं पवित्रमर्घ्ये ऽपेक्षितम् । अतस्तदानीमेव समन्त्रकपवित्रकरणं, न श्राद्धारम्भात्पूर्वम् । नच तदानीमपि पवित्रप्रोक्षणमपेक्षितमिति वाच्यम् । दलद्वयं सन्निधाप्य प्रोक्षणं कार्यमर्घ्यसमये तेनैव दलद्वयेन पवित्रं कर्तव्यमिति । नच श्राद्धोपयुक्तयावद्द्रव्यप्रोक्षणमादौ कर्तव्यं पवित्रञ्च तदुपयुक्तं न दलसामान्यमिति वाच्यम् । तथा सति प्रोक्षितपिण्डदानापत्तेः । आकारविशेषविशिष्टस्यापि तत्त्वात्तद्भावात् । तथा च पिण्डघटकान्नादिप्रोक्षणेन यथा पिण्डस्य संस्कारः, तथा पवित्रघटकदलप्रोक्षणादेव पवित्रसंस्कारः । किञ्च पवित्रप्रोक्षणं "विष्णोर्मनसा पूतेस्थ" इति मन्त्रकर्तव्यं, तच्च नादौ विहितं किन्त्वर्घ्यसमये एवेति । ननु पवित्रे इति द्विवचनानुपपत्तिः, पवित्रपदस्य दलद्वयवाचकत्वात् नानार्थत्वकल्पने मानाभावादिति । नैवम् । मन्त्रपाठकरणकच्छेदान्मन्त्रपाठकाले छेदाभावेन पवित्रत्वानिष्पत्तेरिति पवित्रपदं तदारम्भकदलपरम् । एवं प-

वित्रे इति मन्त्रेऽपि । "विष्णोर्मनसा पूतेस्थ" इत्येतत्पाठकाले पवित्रवाच्यत्वेऽपि तत्र विशेष्यपदाभावादनन्वयेऽन्वयार्थं पूर्वमन्त्रस्थं पवित्रे इति पदमनुषज्यते । तस्य च दलपरतैवोक्ता । नह्येकं पदं तत्र दलमात्रपरमत्र दलद्वयपरं भवितुमर्हति । तदात्वनुषङ्गः । अनुषङ्गे तत्पदस्यैव पदान्तरसमभिव्याहारतात्पर्यम् । आवृत्तौ तु तादृशपदान्तरकल्पनम् । तथा च पवित्रे कुरुते इत्यनेन दलद्वयविषयककृतिर्विहिता । तत्र किंक्रियानुकूला कृतिरित्यत्राऽऽह—छिनत्तीति । इति सर्वं समञ्जसम् ।

इति श्रीमहामहोपाध्याय पं० रामकृष्णभट्टाचार्य
विरचिताऽधिकरणकौमुदी समाप्ता ॥

---

अस्मिन् ग्रन्थे ऽनिर्दिष्टानि कानि चित् बहुशश्चोपयुक्ताधिकरणानि प्रदर्श्यन्ते ।

## १ अथ वाजपेयाधिकरणम् ।

इदं श्रूयते "वाजपेयेन स्वाराज्यकामो यजेत" इति । वाजोऽन्नं तस्य पेयं द्रवीभूतो रसो यवागूरिति यावत(१) । अत्रोक्तव्युत्पत्त्या वाजपेयशब्दस्य प्रसिद्धार्थकत्वेन "दध्ना जुहोति" इतिवद् यजतिना ज्योतिष्टोमं प्रकृतमनूद्य वाजपेयद्रव्यविधानाद् गुणविधिरिति चेत्फलपदानर्थक्यापातः । अथ फलोद्देशेनापूर्वं कर्म विधेयं, तदुद्देशेन च द्रव्यरूपगुणविधिस्तर्हि वाक्यं भिद्येत । तत्परिजिहीर्षयैकस्यार्थिकत्वे "सोमेन यजेत" इतिवद् मत्वर्थलक्षणाप्रसङ्गः 'वाजपेयद्रव्यवता यागेन स्वाराज्यं भावयेत्' इति ।

---

(१) अधिकरणमालादिषु 'वाजो ऽन्नं तच्च पेयं सुराद्रव्यमिति यावत्' इति व्युत्पत्तिः प्रदर्शिता । मूलोक्ता तु तन्त्रवार्तिके—
"वाजपेयं यवागूः स्यादौषधद्रव्यता ततः" इत्यनेन स्पष्टीकृतेति सुधिभिराकलनीयम् ।

इति चेन्न । तन्त्रेणाख्यातस्य फलद्रव्याभ्यां युगपत्सम्बन्धस्वीकारेण विनैव मत्वर्थलक्षणामुभयविधिसिद्धेः । आह च—

करणेषूपदिष्टेषु या ऽर्थात्साध्यत्वकल्पना ॥
तस्यां गुणविधानेन नास्ति मत्वर्थलक्षणा ॥ १ ॥

तथाहि—यजेतेत्याख्यातस्य तावद् द्वौ भागौ।एकः प्रकृतिरपरश्च प्रत्ययः। तत्र प्रत्ययांशेन तावद् भावनोच्यते। प्रकृत्यंशेन च यागः। प्रकृतेश्च निर्विभक्तिकतया प्रत्ययार्थेन सार्कं सम्बन्धविशेषानवबोधात्समभिव्याहारात्सम्बन्धसामान्यं प्रतीयते । तदुक्तम्—

सम्बन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः ॥
तदेकांशनिवेशे तु व्यापारो ऽस्या न विद्यते ॥ २ ॥ इति ।

निर्विशेषं न सामान्यमिति विशेषाक्षेपोन्मुखं तदविशेषाद् द्रव्यफलापेक्षितं साध्यसाधनरूपं सम्बन्धद्वयमाक्षिपेत् । तथा च द्रव्येण सम्बन्धात् कर्मकारकत्वं 'वाजपेयद्रव्येण यागं भावयेत्' इति । फले सम्बन्धे च करणकारकत्वमपि 'यागेन स्वाराज्यं भावयेत्' इति । न खलु काचिदत्र कर्मत्वस्य करणत्वस्य वा प्रतिपादिका साक्षादसाधारणी विभक्तिः श्रूयते, येन उभयसम्बन्धासम्भवः स्यात् । तस्माद् गुणकर्मोभयविधिरित्यत्र सिद्धान्तसूत्रे—"तुल्यत्वात् क्रिययोर्न" (अ०१.पा०४.अधि०६.सू०७) "ऐकशब्द्ये परार्थवत्"(अ०१.पा०४.अधि०६.सू०८) इति। अयमर्थः—क्रिययोः—दर्शपूर्णमासवाजपेययोः, तुल्यत्वात्—समानत्वात्,न—गुणविधिर्नेति । तथा —सकृदुच्चरिते धात्वर्थे कर्मत्वकरणत्वयोर्युगपत्सम्बन्धत्वसापेक्षया परो यवागूरूपो यो ऽर्थस्तद्विधानवत् तद्विधानाश्रयः तदर्थमनुवादवदिति यावत् ।

अयम्भावः—यवागूरूपगुणविधाने ओषधिद्रव्यत्वेन वाजपेयस्य दर्शपूर्णमासविकृतित्वापत्तिः । न चेष्टापत्तिः "सप्त-

दशोपसत्को वाजपेयः” इति सौमिकधर्मश्रुतिविरोधात् ।

किञ्च यागस्य तन्त्रेण सम्बन्धाङ्गीकारे विरुद्धत्रिकद्वयापत्तिः । विरुद्धत्रिकं च—

उपादेयविधेयत्वगुणत्वाख्यं त्रिकं यजेः ।
उद्देश्यानूक्तिमुख्यत्वत्रिकं तस्य गुणं प्रति ॥ ३ ॥

इति माधवाचार्येणोक्तम् ।

तत्रोद्देश्यत्वमिच्छाविषयत्वम् । उपादेयत्वञ्च अनुष्ठीयमानत्वम् । ततश्चैतौ मनःशरीरोपाधिकौ धर्मौ । विधेयत्वं नाम विधिविषयत्वम् । विधिश्च अज्ञातबोधनम् । ज्ञातस्य कथनन्त्वनुवाद इति । विधेयत्वानुवाद्यत्वधर्मौ च शब्दोपाधिकौ । मुख्यत्वं तावत् प्रधानत्वम् । गुणत्वञ्च अप्रधानत्वम् । न चैतस्य त्रिकद्वयस्यैकत्रावस्थानं सम्भवति, मिथो विरोधात् ।

यागफलयोस्तावत्स्वभावपर्यालोचनायां फलमुद्दिश्य यागस्योपादेयत्वात्, फलानुवादेन तत्साधनतया यागस्य विधानात्, फलेच्छाधीनेच्छाविषयत्वाच्च, यागस्योपादेयत्वादित्रिकं, फलस्य च उद्देश्यत्वादित्रिकं पर्यवस्यति ।

तथा यागवाजपेयद्रव्ययोः स्वभावपर्यालोचने यागमुद्दिश्य द्रव्यस्योपादेयत्वाद्,यागानुवादेन तस्य विधानात्, तदधीनेच्छाविषयत्वाच्च यागस्योद्देश्यत्वादि, द्रव्यस्य उपादेयत्वादि, त्रिकं पर्यवस्यति । न च द्रव्यं प्रति यागोऽर्हः उपादातुम् । तस्य तत्संस्कारकत्वप्रसङ्गात्, तृतीयाश्रुतिबाधाच्च । नापि संस्कृतस्य यवागूद्रव्यस्यान्यत्रोपयोगोऽस्ति येनैवमाश्रीयेत । तस्माद्वाजपेयपदस्याग्निहोत्रशब्दवद्यागसामानाधिकरण्येन च कर्मनामधेयतेति स्वतन्त्रकर्ममात्रविधिरिति ।

## २ अथारुणाधिकरणम् ।

ज्योतिष्टोमे श्रूयते "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इति । तत्रारुणाशब्दो गुणिविषयतया प्रयुज्यमानोऽपि अरुणं गुणमाचष्टे । "नागृहीतविशेषणा विशिष्टबुद्धिः" इति न्यायादन्वयव्यतिरेकाभ्यां तत्रैव व्युत्पत्तेश्च । तस्य च तृतीयाश्रुत्या क्रयसाधनत्वं प्रतीयते । तच्चानुपपन्नम् । अमूर्तस्य तस्य वासोहिरण्यादिवत्क्रयसाधनत्वासम्भवात् । उक्तं च–

अमूर्तत्वाद् गुणो नैव क्रियां साधयितुं क्षमः ॥
तस्मात्क्रीणातिना नास्य सम्भवत्येकवाक्यता ॥ १ ॥ इति ।

अतश्च तृतीयाश्रुतेरविनियोजकतया तया ज्योतिष्टोमप्रकरणगतग्रहचमसादीन् करणतयोपदिष्टाननूद्यारुण्यरूपो गुणो विधीयते ।

यदि च विभक्तेः निष्कृष्य कारकशक्त्यभिधायकत्वेन क्रियाविशेषकत्वात्कथं कृदन्तकरणादिशब्दवत्तृतीयया द्रव्याभिधानमिति उच्यते, तर्हि गुणवाचकप्रातिपदिकस्योपादानलक्षणया द्रव्यवाचित्वेन तृतीयया तद्गतकरणत्वाभिधानेन प्राप्ताप्राप्तविवेकेन विधिशक्तेर्गुणे उपसंक्रमात् प्रकरणगतविशेष्यभूतद्रव्यानुवादेन विशेषणभूतो गुणस्तत्परिच्छेदकत्वेन विधीयते । तथा च अरुणयेति भिन्नं वाक्यं, पिङ्गाक्ष्येति च । तत्राऽऽद्यस्य येन द्रव्येण किञ्चित् क्रियते तेनाऽरुणगुणकेन इत्यर्थः । नचैवं पिङ्गाक्ष्येकहायन्योरपि ज्योतिष्टोमगतसकलसाधनद्रव्यगामित्वं शङ्कनीयम् । तयोर्द्रव्यवाचित्वेन द्रव्यान्तरगामित्वासम्भवात् ।

नच पिङ्गे अक्षिणी यस्या इति षष्ठ्यर्थे समासविधानात्सम्बन्धवाचित्वं शङ्क्यम् । लाघवानुरोधेन सर्वैरपि यौगिकैः

शब्दैर्द्रव्याभिधानात् ॥

तथाहि—तेषां सम्बन्धवाचित्वे सम्बन्धमात्रमभिधेयं कल्प्यते, सम्बन्धविशेषो वा ? । नाद्यः, तेषां सर्वेषां सम्बन्धमात्रवाचितयैकार्थकत्वापातात् । अथ सम्बन्धविशेषः । ततस्तज्ज्ञानस्य सम्बन्ध्यधीनत्वादनुक्तसम्बन्धिनश्च तद्व्यवच्छेदासामर्थ्यमिति, तस्य चोभयनिष्ठत्वादुभौ सम्बन्धिनाववश्यमभिधातव्यौ । तत्रैकस्य वृत्तिघटकपदेनाभिधानाद् द्वितीयनिरूपिता वृत्तौ शक्तिः कल्प्यते इत्यवश्यमभ्युपेतव्यमिति । ततश्च सम्बन्धिनमभिधाय सम्बन्धाभिधानेऽतिगौरवमिति। एवं च पिङ्गाक्ष्येकहायनीशब्दयोरपि पिङ्गे अक्षिणी यस्याः, एकं हायनं यस्या इति यौगिकत्वेन सिद्धं द्रव्यवाचित्वम् । उक्तं च—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
न हि सम्बन्धवाचित्वं सम्भवत्यतिगौरवात् ॥ २ ॥
सम्बन्धिनैव सम्बन्धः प्रत्येतुं यदि शक्यते ।
पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेत् ॥ ३ ॥

एवं च वाक्यभेदेन प्रकरणात् ज्योतिष्टोमगतकरणभूतसकलद्रव्यगामी आरुण्यगुणः ।

यत्तु समानवाक्यश्रुतपिङ्गाक्षीद्रव्यानुवादेनाऽऽरुण्यगुणो विधीयताम् । वाक्यभेदश्च नेति । तन्न, "एकशब्द्ये परार्थवत्" इतिन्यायेन पिङ्गाक्ष्याः क्रयारुणौ प्रति वैरूप्यप्रसङ्गादिति पूर्वपक्षे सिद्धान्तसूत्रम्—"अर्थैकत्वं द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्" इति ( अ०३–पा० १–अधि०६–सू० १२ ) अयमर्थः—द्रव्यगुणयोरेकक्रियान्वयित्वरूपार्थैकत्वे सम्भवति तयोः परिच्छेद्यपरिच्छेदकभावनियमः । ऐककर्म्याद् एकार्थप्रति-

पादकत्वरूपैकवाक्यत्वात् । अयम्भावः–उदाहृतवाक्येन भावार्थाधिकरणन्यायेन ( अ० २–पा० १ अधि० १ सू० १ द्वितीयवर्णकम् ) क्रयो विधीयते । तस्मिंश्च तृतीयाश्रुत्या पिङ्गाक्ष्यादेर्यथा करणत्वं, तथा आरुण्यगुणस्यापि । तच्च स्वसाध्यक्रियापेक्षितया पिङ्गाक्ष्यादिद्रव्यमनपेक्ष्यैव वाक्येन साक्षात्क्रयेऽन्वेति । खलेकपोतन्यायेन सर्वकारकाणां साक्षात्क्रियान्वयनियमात् । उक्तं च—

कारकं ह्युच्यते कुर्वन्नाक्रियां तत्करोति च ॥
तस्मान्न द्रव्यसम्बन्धः कारकस्यास्ति कस्यचित् ॥४॥ इति ।

यदि तस्यामूर्तत्वात्साक्षात्क्रियासाधनत्वं न सम्भवति इति विभाव्यते, तर्हि क्रयसाधनद्रव्यपरिच्छेदमुखेनान्वीयताम् । तदुक्तम्—

तृतीयया गुणस्यैव करणत्वं क्रयं प्रति ॥
विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यते ॥ ५ ॥

किञ्च—

द्रव्येण साधनीयेयमिति ज्ञाता यदा क्रिया ।
कीदृशेनेत्यपेक्षाऽस्य गुणेऽप्युत्पद्यते तदा ॥ ६ ॥

द्रव्यमप्यपरिच्छिन्नं न क्रियां साधयितुमलमिति परिच्छेदकमपेक्षते । गुणश्च क्रियासाधनत्वेनोच्यमानः तां च स्वतः साधयितुमक्षमः तदर्थं परिच्छेद्यं द्रव्यमपेक्षते इति द्रव्यगुणयोः परस्परमपेक्षितत्वात्सुनिरूपितः पार्ष्णिकः परिच्छेद्यपरिच्छेदकभावेनान्वयः । युक्तं च गुणस्य तत्परिच्छेदकत्वात्क्रियासाधनत्वाभिधानम् । एवञ्च साधनत्वेन गुणं विदधती श्रुतिः यथैतेन शक्यते क्रियां साधयितुं तथा कुर्यादित्याह । स च द्रव्यपरिच्छेदेनैव शक्नोति साधयितुं, नान्यथा ।

तथा च अरुणपरिच्छिन्नेन पिङ्गाक्षीद्रव्येण क्रयं कुर्यादित्यर्थस्य पर्यवसानेन वाक्यभेदाभावेन च न चमसादिषु गुणो निविशते ।

किञ्च प्रकरणेन चमसादिषु गुणनिवेशं वदता वक्तव्यमिदं केन तत्र गुणो विधीयते । नच श्रूयमाणविधिना तत्सम्भवति । क्रीणातिना त्वया सम्बन्धस्य नेष्यमाणत्वात् । नाप्यरुणपदस्य विधिशक्तिरस्ति । प्रयोगवचनं त्वक्रियात्मकं दूरादुपेक्षते । मम तु क्रीणातिना सम्बन्धस्येष्टत्वात्सुलभं विधानम् । न चैवं वासोहिरण्यादिषु क्रयसाधनत्वात्तन्निवेशः स्यादिति वाच्यम् । तेषां क्रयान्तरसाधनत्वात् । नहि स्ववाक्यगतं पिङ्गाक्षीद्रव्यमुपेक्ष्य वाक्यान्तरोपात्तवस्त्राद्यवच्छेदो युक्तः । तस्मादारुण्यगुणः क्रयहेतुं पिङ्गाक्षीमेव भजते इति ।

३ अथ वैश्वानरेष्ट्यधिकरणम्—

काम्येष्टिकाण्डे श्रूयते "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते, यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति, यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति । तत्राष्टाकपालादिशब्दाः प्रकृतवैश्वानरयागस्य नामधेयपरा गुणविधिपरा अर्थवादपरा वा ? । तत्राष्टाकपालादिशब्दबोधिताष्टत्वादिसंख्यानां द्वादशस्वन्तर्भावेन प्राप्तत्वात्तत्प्रख्यन्यायेन "वैश्वदेवेन यजेत" इतिवद् "अग्निहोत्रं जुहोति" इतिवद्वा तेषां यागनामधेयत्वं युक्तम् ।

तत्र हि "वैश्वदेवीमामिक्षाम्"इत्यनेन यागे विश्वदेवसम्बन्धस्य

प्राप्ततया "वैश्वदेवेन यजेत" इत्यत्र वैश्वदेवशब्देन विश्वदेवदेवताविधानासम्भवात्तस्य नामधेयविधित्वम्। "अग्निहोत्रं जुहोति" इत्यत्रापि "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति मन्त्रवर्णेनाग्नेः प्राप्तत्वेन तद्विधानासम्भवादग्निहोत्रमिति कर्मनामधेयम्।

अथ नात्र द्वादशकपालादिशब्दाः संख्यापराः, किन्तु द्वादशसु कपालेषु संस्कृतः पुरोडाश इति योगेन द्रव्यपराः। एवञ्च द्रव्ये द्रव्यान्तरानन्तर्भाव इत्यप्राप्तत्वम्। द्वादशकपाल एवाष्टसु संस्कृत इति तु वक्तुमशक्यम्। अन्यथा ऽष्टानामन्यैश्चतुर्भिः कपालैः साकाङ्क्षतया सामर्थ्याभावात्समर्थाधिकारे "संस्कृतं भक्षाः" ( अ० ४ पा० २ सू० १६ ) इति पाणिनिसूत्रविधीयमानतद्धितानुत्पत्तिप्रसङ्गः। एवं च न नामत्वम्। अप्राप्तत्वादेव च नार्थवादत्वम्। न ह्यविहितस्याष्टाकपालस्य स्तुतिः सम्भवति। तदुक्तम्—

"सामानाधिकरण्ये हि नामधेयं प्रगीयते"। इति।
"पूर्वज्ञातार्थवाचित्वे नामधेयार्थवादते"॥ इति च।

तस्मात्प्रकृतवैश्वानरयागे ऽष्टाकपालपुरोडाशरूपगुणविधिरिति।

न चैवमुत्पत्तिशिष्टद्वादशकपालावरुद्धत्वात् तत्रान्यद्रव्यानिवेशासम्भवात्तद्वैयर्थ्यमिति वाच्यम्। उपक्रमोपसंहारवशात्सर्वं चेदमेकं वाक्यमिति पर्यालोचनेन वैकल्पिकाष्टाकपालादिद्रव्यविशिष्टवैश्वानरेष्टिविधानात्सर्वेषामुत्पत्तिशिष्टत्वसाम्येन पक्षे चारितार्थ्यात्। तस्माद् गुणविधिरिति पूर्वपक्षे सिद्धान्तसूत्रम्—

**अविभागाद्विधानार्थे स्तुत्यर्थेनोपपद्येरन्** ( अ० १-पा० ४-अधि० ११ सू० २० ) इति। अयमर्थः—विधानार्थे-कपालगतद्वादशसंख्यायामष्टत्वादिसंख्याया अविभागात्—नियमात्,

तस्या अवयवरूपत्वादिति यावत् । द्वादशकपालस्तुसमर्थत्वेनाष्टाकपालादिशब्दा उपपद्येरन् । अवयवस्तुतिद्वारा अवयविस्तुतिरित्यर्थः । तथा हि—

अष्टत्वाद्यविधानत्वाद्व्यर्थेयं तत्प्ररोचना ।
तस्मादवयवद्वारं द्वादशत्वं प्ररोच्यते ॥

**अयम्भावः**—सर्वत्र तावद्वरस्य स्तुतिर्दृश्यते। वरं चात्र द्वादशकपालसंस्कृतपुरोडाशद्रव्यं विधेयत्वात्। तस्मात्तस्य यथा स्तुतिर्भवितुमर्हति तथा कर्तव्या। अष्टाकपालादिशब्दाश्च तत्प्रतीत्यजनका अपि तदेकदेशं प्रत्याययितुमर्हन्तीति तदेकदेशप्रत्यायनद्वारा एकदेशिनो द्वादशकपालस्य तैः शब्दैः स्तुतिः प्रतीयते । तथा च श्रुतेरयमर्थः—ईदृशोऽयं द्वादशकपालः पुरोडाशो महाभागः, यस्मिन् क्रियमाणे अष्टाकपालादयोऽपि सम्भाविता भवन्ति, ते च ब्रह्मवर्चसादिसिद्धिभिः प्रशस्ताः, तस्मात्प्रशस्तोऽयमिति । यागविधायकवाक्येन द्वादशकपालस्य विहिततया न स्तुत्यस्याज्ञातत्वं, येनाष्टादिशब्दानां स्तावकत्वं नोपपद्येत ।

किञ्च तस्य "जगत्यैवास्मिन्" इति पृथक्स्तुतिसत्त्वेऽप्यधिकप्राशस्त्यबोधनार्थमाधिकस्तुत्यपेक्षया नानर्थक्यम् ।

विधिपक्षे तु वैश्वानरस्य द्वादशकपालावरुद्धत्वात् पश्चाच्छ्रूयमाणाष्टाकपालादीनां वैयर्थ्यं स्पष्टमेव ।

ननूक्तं सर्वेषामुत्पत्तिशिष्टत्वेन समानबलत्वाद्व्रीहियववद्विकल्पेन चारितार्थ्यमिति । तत्रोक्तम्—

उत्पत्तिवाक्यशिष्टत्वं न तावदुपपद्यते ।
सर्वेषामर्थभेदेन वाक्यं तत्र हि भिद्यते ॥

वैकल्पिका अष्टाकपालादिगुणा वैश्वानरे विधीयन्ते इति वि-

भाव्यते चेन्नानागुणविधानेनार्थभेदाद्वाक्यभेदप्रसङ्गः । उपक्रमोपसंहारदर्शनेन च वाक्यैकत्वं प्रतीयते । तस्मान्नाष्टाकपालादीनां समानबलवत्त्वमिति ।

ननु मास्तूत्पत्तिशिष्टत्वं परमष्टाकपालादिगुणविधिगतद्वादशकपालाद्यन्यथाऽनुपपत्त्या वैश्वानरवाक्यगतद्वादशकपालस्य सामान्यतो द्रव्योपलक्षकत्वविवक्षणात्सर्वेषामेवैभिर्विधानादुत्पन्नशिष्टत्वात्तुल्यबलत्वमिति । उच्यते, अष्टाकपालादीनां स्तावकत्वेनोपपत्तौ विधिवाक्यगतवैश्वानरसमानाधिकरणद्वादशकपालशब्दस्योपलक्षणत्वविवक्षाया निष्प्रमाणत्वात् ।

किञ्च निर्वपतिनाऽत्र यागो विधीयते । स च द्वितीयान्तेन द्वादशकपालेनैव सम्बध्यते, न तु प्रथमान्ताष्टाकपालादिभिः, निराकाङ्क्षत्वात् । आख्यातार्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबोधे प्रातिपदिकाद्विहितकारकविभक्तिजन्योपस्थितेः कारणत्वादाख्यातस्य कारकविभक्त्यन्तेन साकाङ्क्षत्वात् । नचाष्टाकपालादिवाक्यैः स्वतन्त्रं कर्म विधीयते । द्रव्यदेवतारूपयागस्वरूपानुपलब्धेः ।

ननु वैश्वानरपदस्य अनुषङ्गाधिकरणन्यायेन ( अ० २—पा० १ सू० १६ ) सम्बन्धे देवतालाभेन यागस्वरूपासिद्धिरिति चेन्न । भिन्नविभक्तिकत्वेन द्वितीयान्तवैश्वानरपदस्य प्रथमान्ताष्टाकपालादिशब्दैरनुषङ्गासम्भवात् । तदुक्तम्—

वैश्वानरपदं नापि यागायात्रानुषज्यते ।
विभक्त्यन्तरयोगित्वात्, न चर्तेऽस्मादनर्थकम् ॥ इति ।

न च विभक्तिविपरिणामेन तत्सम्भव इति वाच्यम् । अष्टाकपालादिश्रुतेः स्तावकत्वेनोपपत्त्या ऽनुषङ्गविभक्तिविपरिणामयोरयुक्तत्वात् ।

नापि ब्रह्मवर्चसादिफलाय गुणविधिः । वाक्यभेदप्रसङ्गात् । तस्मात् पूर्वोक्तप्रकारेण नामधेयविधित्वयोरभावेन 'पुत्रे जाते' इत्यत्रोपक्रान्तस्य द्वादशकपालस्य 'यस्मिन् जाते' इत्यनेनोपसंहारादेकवाक्यत्वपर्यालोचनया स्तुत्या विना च तदसम्भवात्स्तावकत्वमेव युक्तम् । तथा च अष्टाकपालादिभिरंशैरंशिनो द्वादशकपालस्य स्तुतिरिति ॥

४ अथासञ्जातविरोधिन्यायः ।

"प्रजापतिरकामयत प्रजाः सृजेयेति । स तपोऽतप्यत । तस्मात्तेपानात्* त्रयो देवा असृज्यन्त 'अग्निर्वायुरादित्यः' । ते तपोऽतप्यन्त । तेभ्यस्तेपानेभ्य*स्त्रयो वेदा ह्यसृज्यन्त । अग्नेर्ऋग्वेदो, वायोर्यजुर्वेद, आदित्यात्सामवेदः" इत्युपक्रम्य ज्योतिष्टोमे श्रूयते "तस्मादुच्चैर्ऋचोपांशु यजुषा उच्चैः साम्ना" इति । अत्रोपक्रमोपसंहारयोरेकवाक्यत्वानुरोधाय तयोरेकार्थविषयत्वावश्यकतया उच्चैस्त्वादिविधिवाक्यगतऋगादिशब्दा—यत्रार्थवशेन पादव्यवस्थेत्यादिलक्षणार्थकाः पूर्वश्रुतमन्त्र—ब्राह्मणसमुदायपरवेदशब्दसामानाधिकरण्याय लक्षणया तदर्थपरत्वेन व्याख्येयाः? उतोपक्रमगतवेदशब्द एवोपसंहारस्थऋगादिशब्दसमानार्थत्वाय लक्षणया व्याख्येय इति ? । तत्रोक्तम्—

गुणत्वादनुवादत्वादर्थवादस्य लक्षणा ॥
मुख्यस्यापि प्रधानत्वादप्राप्तविषयत्वतः ॥

विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति ॥ इति ।

उच्चैस्त्वादिधर्मविधाने हि ऋगादेरुद्देश्यतया विधिवाक्यगतत्वेन प्राबल्यादप्राप्तविषयत्वेन प्राधान्याच्च तदपेक्षयोपक्र-

* कानजन्तमेतत् ।

प्रगतवेदशब्दस्यार्थवादगतत्वेन तस्य च विधिसापेक्षप्रमाणत्वेन दौर्बल्यात्, प्रमाणान्तरसिद्धस्यैवानुकीर्तनमर्थवाद इत्यनुवादत्वाद् गुणभूतत्वेन "गुणे त्वन्यायकल्पना" इति न्यायेनोपक्रमगतो वेदशब्द एव लक्षणया तदेकदेशमन्त्रपर इति।

किञ्च ऋगादिशब्दानां वेदपरत्वे तैस्तदेकदेशब्राह्मणाभिधानं स्यात्। नच कदाचिदपि साम्प्रदायिका ब्राह्मणे ऋक्शब्दं प्रयुञ्जते। दृष्टप्रयोगानुसारिणी च सर्वत्र वृत्तिकल्पना युक्ता। वेदशब्दस्तु 'ग्राम आयात' इतिवदेकदेशं बोधयितुमीष्टे। ऋचं ब्राह्मणमात्रं वा ऽधीयानस्य सर्वैरपि वेदाध्यायी इत्युच्यमानत्वात्।

किञ्च एकत्र वेदे पठ्यमाना वेदान्तरेऽप्युपलभ्यन्ते काश्चिदृचस्तथा यजूंषि सामानि च। वेदपरत्वे तेषूच्चैस्त्वादिधर्मस्यानुष्ठाने संशय—उभयवेदगतत्वेन किङ्कृतस्यानुष्ठानमिति। वेदद्वयव्यपदेशस्य तुल्यतया समानबलवत्त्वविभावने त्वष्टदोषग्रस्तविकल्पापत्तिः। तेषां ऋगादिपरत्वे तु नोक्तापत्ती। न ह्येकस्मिन् वर्णसमुदाये ऋक्त्वं यजुष्ट्वं चेत्युभयं समवेतम्। ज्योतिष्टोमप्रकरणं चैवमनुगृह्यते। अन्यथा वेदस्य समस्तेष्टिपश्वेकाहाहीनसत्रविषयत्वाद्यावद्वेदानुसारी धर्मः प्रकरणमुल्लङ्घ्य सार्वत्रिकः स्यात्। तथाचोपक्रमगतवेदशब्दस्य तदवयवे लक्षणया ऋगादिपरत्वमिति पूर्वपक्षे सिद्धान्तसूत्रम् "वेदो वा प्रायदर्शनात्। (अ० ३ पा० ३ अधि० १ सू० २) इति। अयमर्थः—वेदः—उक्तविध्युद्देशः मन्त्रब्राह्मणसमुदायरूपवेदधर्मः। ऋग्वेदेन विहितं कर्म उच्चैः कर्तव्यम्, यजुर्वेदेनोपांशु, सामवेदेनोच्चैरिति यावत्। प्राये-वाक्योपक्रमे दर्शनात्—वेदशब्ददर्शनात्। अयम्भावः—उपक्रमे मन्त्रब्राह्मणसमुदायपरवेदपदश्रुत्या तज्जनितसंस्कारव्याप्तमनस्कतया पश्चाच्छ्रूयमाणऋगादिशब्दानामेव लक्षणा करणीया।

यत्तु विध्युद्देशबलीयस्त्वान्न तत्र लक्षणेति । तत्रोक्तम्—

विध्यर्थवादसम्बद्धमन्यदेव बलाबलम् ।
मुख्यपश्चात्तनत्वेन ज्ञानानामन्यदेव तत् ॥ इति ।

ते एवार्थवादा विध्युद्देशैः प्रबाध्यन्ते ये पश्चाच्छ्रूयन्ते । येतु पूर्वं, न ते पश्चाच्छ्रूयमाणस्य विधेरप्यनुरोधाय स्वार्थातिक्रमं सहन्ते, कुतो विध्युद्देशस्य । सर्वेषामपि शब्दानां स्वार्थातिक्रमे विरोधः कारणम् । स च विरोधिज्ञाने सत्येवोपपद्यते । न चात्र "त्रयो वेदा ह्यसृजन्त अग्नेर्ऋग्वेद" इत्यादिवाक्यश्रवणकाले जातिवाचकऋगादिपदानां श्रुतिः । यद्वशेन वेदशब्दस्तदवयवे लक्षणां भजेत । अवधारिते च तदा वेदपदार्थे उपसंहारगतऋगादिशब्दाः सञ्जातप्रतिपक्षज्ञानत्वात्स्वार्थपराः सन्तस्तदेकवाक्यतामप्रतिपद्यमाना बलाल्लक्षणां भजन्ते ।

किञ्च विध्यर्थवादयोः समानविषयत्वनियमात् यावदेवार्थवादे वेदाः सङ्कीर्तितास्तावदेव किमप्येषां विधास्यते इत्येतदवधृतम् । ततश्च किमेषां विधेयमित्येतन्मात्रमपेक्षते, न तु कस्य किमिति । तथा चोत्तरस्माद्वाक्यादपेक्षितमात्रं गृह्यते । विधेयं चापेक्षितम् , न विधिविषय इति उच्चैस्त्वादिमात्रं सम्बध्यते, नतु ऋगादयः । ततश्चाविवक्षितत्वादेषामर्थवादगतवेदशब्दे च विध्युद्देशत्वेनावधारिते यस्मादेवमेते वेदा जातास्तस्मादेषामुच्चैस्त्वादि कर्तव्यमितिवक्तव्ये तमेवार्थं सिद्धमङ्गीकृत्य ऋगादिशब्दा उच्चार्यन्ते । अन्यथा ह्यसम्बद्धमेव स्यादिति तेषामेवानुवादत्वम् ।

यच्चूक्तं न हि कदाचिदपि ब्राह्मणे ऋक्शब्दप्रयोग इति । तन्न, वेदे एव—

"ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अन्हः ।
सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः" ॥

इति मन्त्रे प्रथमचरणे ऋक्शब्दस्य मन्त्रब्राह्मणसमुदाये प्रयोगदर्शनात् । नहि तत्र स मन्त्रमात्राभिधानाभिप्रायेण प्रयुक्त इति भ्रमितव्यम् । चतुर्थचरणे वेदैरिति बहुवचनानुपपत्तेः ।

यश्च संशय उच्चैस्त्वानुष्ठाने उक्तः सोऽपि न । नहि पाठमात्रेण तद्गतधर्मानुष्ठानप्रसक्तिः । किन्तु येषां यत्र विधानं तेषां तद्गतधर्मो भवति । यदि केषांचिदुभयत्रापि विधानं तर्हि "भूयस्त्वेनोभयश्रुति" ( अ० ३–पा० ३ अधि० ३ सू०१० ) इति न्यायेन निर्णयः । यत्र तु भूयस्त्वमपि नास्ति तत्रेष्ट एव विकल्प इति ।

शिवं भूयात् ।

(१५) शिवस्तोत्रावली । उत्पलदेवविरचिता । श्रीक्षेमराजविरचितवृत्तिसमेता (वेदान्त.) २

(१६) मीमांसाबालप्रकाशः जैमिनीयद्वादशाऽध्यायार्थसंग्रहः श्रीभट्टनारायणात्मजभट्टशङ्करविरचितः । (मीमांसा) २

(१७) प्रकरणपञ्चिका प्रभाकरमतानुसारि—मीमांसादर्शनम् । महामहोपाध्यायश्रीशालिकनाथमिश्रविरचितम् श्राशङ्करभट्टकृतो मीमांसासारसंग्रहश्च सम्पूर्णः (मीमांसा) ३

(१८) अद्वैतसिद्धिसिद्धान्तसारः । पण्डितप्रवरश्रीसदानन्दव्यासप्रणीतस्तत्कृतव्याख्यासमलङ्कृतः । (वेदान्तः) ३

(१९) कात्यायनश्रौतसूत्रम् । महामहोपाध्याय श्रीकर्काचार्यविरचितभाष्यसहितम् । १३

(२०) ब्रह्मसूत्रभाष्यम् । श्रीभास्कराचार्यविरचितं संपूर्णम् (वेदान्तः) ३

(२१) श्रीहर्षप्रणीतं खण्डनखण्डखाद्यम् । आनन्दपूर्णविरचितया खण्डनफक्किकाविभजनाख्यया व्याख्यया विद्यासागरीति प्रसिद्धया समेतम् । (वेदान्तः) १४

(२२) आख्यातचन्द्रिका श्रीभट्टमल्लविरचिता १

(२३) श्रीलक्ष्मीसहस्रम्—बालबोधिनीव्याख्ययाऽवतरणिकया च सहितम् । ८

(२४) ब्रह्मसूत्रवृत्ति मरीचिका श्रीव्रजनाथभट्टकृता (वेदान्त) ... ... २

(२५) क्रोडपत्रसंग्रह । अत्र श्रीकालीशङ्करसिद्धान्तवागीशविरचितानि अनुमानजागदीश्या प्रत्यक्षानुमानगादाधर्यो प्रत्यक्षानुमानमाथुर्यो व्युत्पत्तिवादस्य शक्तिवादस्य मुक्तिवादस्य शब्दशक्तिप्रकाशिकाया कुसुमाञ्जलेश्च क्रोडपत्राणि २

(२६) ब्रह्मसूत्रम्, द्वैताद्वैतदर्शनम् । श्रीसुन्दरभट्टरचितसिद्धान्तसेतुकाऽभिधटीकासहितश्रीदेवाचार्यप्रणीतसिद्धान्तजाह्नवीयुतम् २

(२७) षड्दर्शनसमुचय । बौद्धनैयायिककापिलजैनवैशेषिकजैमिनीयदर्शनसंक्षेपः । मणिभद्रकृतटीकया सहित । हरिभद्रसूरिकृत । ... ... १

(२८) शुद्धाद्वैतमार्तण्ड-प्रकाशव्याख्यासहित । प्रमेयरत्नार्णवश्च ... ... १

(२९) अनुमानचिन्तामणिव्याख्याया शिरोमणिकृतदीधित्या जागदीशी टीका । १३

(३०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित परिभाषा—संस्कारप्रकाशात्मक । सापिण्ड्यदीपकश्च ... ११

(३१) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित आह्निकप्रकाश ६

(३२) स्मृतिसारोद्धार विद्वद्वरविश्वम्भरत्रिपाठिसंकलित । ... ... ... ४

(३३) वेदान्तरत्नमञ्जूषा । श्रीभगवत्पुरुषोत्तमाचार्यकृता । ... ... ... २

(३४) प्रस्थानरत्नाकर । गोस्वामिश्रीपुरुषोत्तमजीमहाराजविरचित ... ... २

(३५) वेदान्तपारिजातसौरभं नाम ब्रह्ममीमांसाभाष्य श्रीनिम्बार्काचार्यविरचितम् । १

(३६) योगदर्शनम् । परमहंसपरिव्राजकाचार्यनारायणतीर्थविरचित—योगसिद्धान्तचन्द्रिकासमाख्यया व्याख्यया संवलितम् । २

(३७) वेदान्तदर्शनम् । परमहंसपरिव्राजकाचार्यश्रीरामानन्दसरस्वतीस्वामिकृतब्रह्माऽमृतवर्षिणीसमाख्यव्याख्यासवलितम् । ४

(३८) विश्वप्रकाश । कोश । विद्वद्वरश्रीमहेश्वरसूरिविरचित । ... ... २

(३९) श्रीसुबोधिनी । श्रीवल्लभाचार्यविनिर्मिता श्रीमद्भागवतव्याख्या गोस्वामीश्रीविठ्ठलनाथदीक्षितविरचितटिप्पणीसहिता । श्रीमद्भागवतदशमस्कन्धजन्मप्रकर्ण श्रीसुबोधिनीटिप्पण्यो—प्रकाशः गोस्वामि श्रीश्री पुरुषोत्तमजीमहाराज विरचित ३

(४०) वीरमित्रोदय । महामहोपाध्यायश्रीमित्रमिश्रविरचित पूजाप्रकाश । ... ४

(४१) वेदान्तसिद्धान्तसंग्रहः । श्रुतिसिद्धान्तापरनामक । श्रीब्रह्मचारिवनमालिमिश्रविरचित । वेदान्तकारिकावली श्रीपुरुषोत्तमप्रसाद. शर्मकृता अध्यात्मसुधातरङ्गिण्याख्य टीकया सहिता । ३

(४२) स्वानुभवादर्श । श्रीमत्परमहंसपरिव्राजकाचार्यनारायणाश्रमशिष्यमाधवाश्रमविरचितः । स्वकृतटीकाविभूषितश्च । १

(४३) याज्ञवल्क्यस्मृतिः । बालम्भट्टीसमाख्य व्याख्यासमलङ्कृतमिताक्षरासहिता । व्यवहाराध्यायः .. ... ... ११

(४४) गादाधरी । श्रीगदाधरभट्टाचार्यचक्रवर्तिकृता । श्रीगङ्गेशोपाध्यायविरचिततत्त्वचिन्तामण्या श्रीरघुनाथतार्किकशिरोमणिविरचितदीधित्या च गर्भिता । ४

(४५) शास्त्रदीपिका । श्रीपार्थसारथिमिश्र प्रणिता । रामकृष्णविरचितयुक्तिस्नेहप्रपुरण्याख्यव्याख्यया सहिता तर्कपाद । ९

(४६) वैयाकरणसिद्धान्तलघुमञ्जूषा महामहोपाध्याय-श्रीनागेशभट्टविरचिता । श्रीमद्दुर्बलाचार्य-बालम्भट्टाभ्यां विरचितकुञ्जिकाकलाद्वटीकाद्वयसंवलिता । ८

(४७) व्याकरणसिद्धान्तसुधानिधिः । पर्वतीय-विश्वेश्वरसूरिविरचितः । ६

(४८) विरमित्रोदयः । लक्षणप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ६

(४९) बृहदारण्यकवार्त्तिकसार श्रीमद्विद्यारण्यस्वामिविरचितः । महेश्वरतीर्थकृतयालघुसंग्रहाख्यया टीकया समलकृतः । ४

(५०) विरमित्रोदयः । राजनीतिप्रकाशः । महामहोपाध्यायश्रीमित्रमिश्रविरचितः । ४

(५१) पूर्वमीमासा अधिकरणकौमुदी । श्रीमन्महामहोपाध्याय पं० रामकृष्णभट्टाचार्यविरचिता परिशिष्टाधिकरणनिरूपणपूर्वक टिप्पण्या परिष्कृत ।

पत्रादिप्रेषणस्थानम् } हरिदासगुप्तः, चौखम्बा बनारस सिटी